अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८८.

श्रीमम्मटभट्टप्रणीतः

# काव्यप्रकाशः

श्रीविद्याचक्रवर्तिप्रणीतया सम्प्रदायप्रकाशिन्याख्यया बृहट्टीकया श्रीभट्टगोपालप्रणीतया साहित्यचूडामण्याख्यया विमर्शिन्या च समेतः

संस्कृतग्रन्थप्रकाशनकार्यालयाध्यक्षपदास्थितेन

रा. हरिहरशास्त्रिणा

संशोधितः ।

प्रथमः सम्पुटः— १–५ उल्लासाः ।

स च

अनन्तशयने

महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितः ।

कोळम्बाब्दाः ११०१, क्रैस्ताब्दाः १९२६.

## PREFACE.

It has been the orthodox practice, with us, to meditate upon *Srī Mahā Gaṇapati* at the commencement of every auspicious undertaking or work. When Mahāmahōpādhyāya Brahmasrī Dr. T. Gaṇapati Sāstrī, the retired Curator for the Publication of Sanskrit Manuscripts, handed over charge of his office to me, the printing of the body of this volume having been almost complete, he entrusted to me the rest of the work and the preface. It is therefore proper that now when I begin to write the preface, reverence to *Srī Gaṇapati* and His Holy Thoughts should be foremost in my mind.

Of the two commentaries of Kāvyaprakāsa, the first is named Sampradāyaprakāsinī. It is a charming and splendid elucidation of the text and surely commends itself to scholars of taste. It is also sometimes referred to as Brihattīkā. Its author Vidyāchakravartin was one of those that graced the council of King Vīra-Vallāla III.

In his commentary of Alankārasarvasva named 'Sanjīvinī', he states incidentally in treating of Pariṇāmālankāra as follows:

"महाराजवीरवल्लालास्थानजुषां विदुषां प्रसादाशिषो हि मय्येता: प्रथन्ते। कास्ता:— संस्कृतसार्वभौम, प्राकृतपृथ्वीश्वर, शौरसेनीशिरोमणे, मागधीमकरध्वज, पैशाचीपरमेश्वर, अपभ्रंशराजहंस, आलङ्कारिकचक्रवर्तिन्, ध्वनिप्रस्थानपरमाचार्य, सहजसर्वज्ञ, परमयोगीश्वर. शैववैष्णवयोगसाङ्ख्यप्रमुखसमस्तस्वात्मविद्यातत्त्वनित्यनिष्णात, अश्रुताधिगतसमस्तविद्याकलाप, अद्वैतविद्याविद्वेषिवनदावानल, कलियुगस्कन्द, अभिनवभट्टाचार्य, वैदिकविद्याप्रतिष्ठापनपरमाचार्य. काव्यमीमांसाप्रभाकर, वादिमृगेन्द्रवेश्याभुजङ्ग इत्याद्या महाराजहोसलराजकुलद्वारि प्रशस्तिशिलाशासनप्रतिष्ठापनात् प्रभृति वयमुपशान्तरभसा: ।"

Since Vīravallāla is known to have lived in the beginning of the fourteenth century A. D., the same must be the time of our author. From his work called Virūpākshapanchāsikāvivriti, he is seen to be a Mahāmāhesvara (a great votary of Paramasiva).

From his Sanjīvinī, it is evident that he has written a work on grammar known as Prayōgapradīpikā. That a certain Kāvya named Rukmiṇīkalyāṇa* was also composed by him is known from the introductory verses in it.

---

* Vide Report on the working of the Peripatetic Party of the Government Oriental Manuscripts Library, Madras, 1916-17; 1918-19.

The edition of this work is based on the following palm leaf manuscripts in Malayalam characters, about three or four centuries old:—

| | | | | | |
|---|---|---|---|---|---|
| 1. | (क) | The text of Kavyaprakasa | | | belonging to the Palace Library, Trivandrum. |
| 2. | (ख) | Do. | Do. | Do. | Do. |
| 3. | (क) | The commentary Brihattīka | | Do. | Do. |
| 4. | (ख) | Do. | Do. | Do. | Mr Rama Pisharodi, Kidangur. |
| 5. | (ग) | Do. | Do. | Do. | Mr. Changarapalli Paramesvaran Potti. |
| 6. | (घ) | Do. | Do. | Do. | Munchira Swamiyar Matham. |
| 7. | (ङ) | Do. | Do. | Do. | Chirakkal Palace, running up to a portion in the 10th Ullāsa. |

The second commentary of Kāvyaprakāsa is named Sāhityachūdamaṇi and is also called Kāvyaprakāsavimarsinī, as is seen from the passage "इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां साहित्यचूडामणौ काव्यप्रकाशविमार्शिन्याम्" occurring at the close of each chapter.

From the same passage is also seen that its author is Bhattagōpāla. His elegant and dignified explanations of the hidden ideas of the text richly entitle him to the addition "Sāhityachakravartin" to his name.

The details connected with his birth are not known. But if he is identical with the Bhattagōpāla, the father of Sāradātanaya, referred to in the two slokas,

"तस्यासीद् भट्टगोपालो नाम्ना सूनुः सुलोचनः ।
अष्टादशसु विद्यासु बहुशः सुकृतश्रमः ॥
उपास्य शारदां देवीं पुत्रं लेभे गुणोत्तरम् ।
तमाह्वयत् पिता प्रीतः शारदातनयाख्यया ॥"

occurring in the first chapter of Bhāvaprakāsa written by Sāradātanaya, he must have lived prior to Srīvidyāchakravartin, the author of Sanjīvinī which refers to this Bhāvaprakāsa in the treatment of Vrittyanuprāsa. As his name is qualified by the attribute "Lauhitya", it can also be inferred that he belonged to a place somewhere about the river Lauhitya.

The edition of this work is based on the following palm leaf manuscripts in Malayalam characters, about three or four centuries old:—

1. (क) Belonging to Kailasapuram Govinda Pisharodi, containing the first six Ullāsas.
2. (ख) Do. Do. Do. containing the first six and the 10th Ullāsas.
3. (ग) Do. Panthalam Palace wanting in the first few leaves.

This— the first part of the Kāvyaprakāsa with the two commentaries, comprising the first five Ullāsas, is now being published. The second part will follow in due course.

Trivandrum,
4th November 1925.

R. HARIHARA SĀSTRĪ.

श्रीः

## उपोद्घातः ।

प्रशस्तकर्मणः सर्वस्य प्रारम्भे हि **श्रीमहागणपतिः** स्मर्यत इत्यस्माकमास्तिकानां सम्प्रदायः । प्राचीनैरेतत्कार्यालयाध्यक्षैर्महामहिममहामहोपाध्यायश्रीगणपतिशास्त्रिभिः स्वाधिकारसमय एवैतत्पुस्तकशरीरं प्रायः सम्मुद्र्य मय्येतदधिकारसमर्पणसमये शेषपूरणपूर्वकं पुस्तकस्यास्योपोद्घातस्त्वया विरच्यतामित्यनुशासनात् सम्प्रति विनैव यत्नं **श्रीगणपति**र्मम हृदयमारोहतीति साम्प्रतमेव ।

**काव्यप्रकाशस्य** व्याख्याद्वयेऽस्मिन् आद्या **सम्प्रदायप्रकाशिनी** नाम । एषा मूलस्याशयं सरसललितोदारं विवृण्वती नूनं सहृदयानां स्पृहणीया । इयं **बृहट्टीके**त्यपि व्यपदिश्यते । अस्याः कर्ता **श्रीविद्याचक्रवर्ती** तृतीयेन **वीरवल्लालभूपालेन** स्वसभायामादृतो बभूव । अयं हि स्वकृतायामलङ्कारसर्वस्वव्याख्यायां **सञ्जीविन्या**ख्यायां परिणामालङ्कारप्रकरणे प्रसङ्गाद् वदति—

> "महाराजवीरवल्लालास्थानजुषां विदुषां प्रसादाशिषो हि मय्येताः प्रथन्ते । कास्ताः—संस्कृतसार्वभौम, प्राकृतपृथ्वीश्वर, शौरसेनीशिरोमणे, मागधीमकरध्वज, पैशाचीपरमेश्वर, अपभ्रंशराजहंस, आलङ्कारिकचक्रवर्तिन्, ध्वनिप्रस्थानपरमाचार्य, सहजसर्वज्ञ, परमयोगीश्वर, शैववैष्णवयोगसाङ्ख्यप्रमुखसमस्तस्वात्मविद्यातत्त्वनित्यनिष्णात, अश्रुताधिगतसमस्तविद्याकलाप, अद्वैतविद्याविद्वेषिवनदावानल, कलियुगस्कन्द, अभिनवभट्टाचार्य, वैदिकविद्याप्रतिष्ठापनपरमाचार्य, काव्यमीमांसाप्रभाकर, वादिमृगेन्द्रवेश्याभुजङ्ग इत्याद्याः । महाराजहोसलराजकुलद्वारि प्रशस्तिशिलाशासनप्रतिष्ठापनात् प्रभृति वयमुपशान्तरभसाः ।"

इति । **वीरवल्लालश्च** क्रैस्ताब्दीयचतुर्दशशतकारम्भे स्थित इति स एवास्य समयः । अयं महामाहेश्वर इति एतद्विरचित**विरूपाक्षपञ्चाशिकाविवृ**तितः प्रतीयते ।

अनेन प्रयोगप्रदीपिका नाम व्याकरणविषयः कश्चन ग्रन्थो विरचित इति **सञ्जीविन्यां** स्पष्टम् । **रुक्मिणीकल्याणाख्यं** किञ्चित् काव्यं चानेन विरचितमिति तदुपोद्घातपद्यैरवगम्यते ।

एतद्ग्रन्थपरिशोधनाधारभूता आदर्शास्त्वेते—

| | | |
|---|---|---|
| क. | काव्यप्रकाशः | राजकीयग्रन्थशालीयः । |
| ख. | तथा | तथा |
| क. | बृहट्टीका | राजकीयग्रन्थशालीया चतुश्शतवर्षवृद्धा । |
| ख. | तथा | किटङ्ङूर् रामपिषारोटिसम्बन्धिनी त्रिशतवर्षवृद्धा । |
| ग. | तथा | चङ्ङारप्पाळ्ळि परमेश्वरन्पोत्तिसम्बन्धिनी चतुश्शतवर्षवृद्धदेश्या । |
| घ. | तथा | मुञ्चिरमठसम्बन्धिनी चतुश्शतवर्षवृद्धदेश्या । |
| ङ. | तथा | चिरक्कल् राजकीयग्रन्थशालीया, आदितो दशमोल्लासैकदेशान्ता, त्रिशतवर्षवृद्धा । |

सर्व एते तालपत्रात्मकाः केरलीयलिपयश्च ।

द्वितीया तु **साहित्यचूडामणिः काव्यप्रकाशविमर्शिनी**ति च व्यपदिश्यते । तत्तदुल्लासान्ते "इति **साहित्यचक्रवर्तिलौहित्यभट्टगोपाल**विरचितायां **साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्याम्**" इति दर्शनात् । अत एवास्याः कर्ता **भट्टगोपाल** इत्यप्यवगम्यते । अयं सरसं प्रौढं च मूलमर्मविशदीकरणपर्याप्तं व्यवहरन् साहित्यचक्रवर्तीति स्वनामविशेषणमन्वर्थयति ।

अस्याभिजनादिकं न विशेषतो ज्ञायते । किन्तु यदि **शारदातनय**विरचित**भावप्रकाश**प्रथमाधिकारस्थिताभ्यां

"तस्यासीद् भट्टगोपालो नाम्ना सूनुः सुलोचनः ।
अष्टादशसु विद्यासु बहुशः सुकृतश्रमः ॥
उपास्य शारदां देवीं पुत्रं लेभे गुणोत्तरम् ।
तमाह्वयत् पिता प्रीतः शारदातनयाख्यया ॥"

इति श्लोकाभ्यां स्मृताच्छा**रदातनय**स्य पितु**र्भट्टगोपाला**दयमभिन्नः, तदा **सञ्जीविन्यां** वृत्त्यनुप्रासप्रकरणे **भावप्रकाश**स्यास्य स्मृतत्वात् **सञ्जीविनी**कर्तुः **श्रीविद्याचक्रवर्तिनः** पूर्वकालभावित्वमस्य सिद्धम् । स्वनाम्नि **लौहित्ये**ति विशेषणादयं **लौहित्यनद**समीपदेशवर्तीति च शक्यमूहितुम् ।

एतद्ग्रन्थपरिशोधनाधारभूता आदर्शास्त्वेते—

क. कैलासपुरगोविन्दपिषारोडिसम्बन्धी १–६ उल्लासाः ।

ख. तथा १–७, १० उल्लासाः ।

ग. पन्तलराजकीयग्रन्थशालीय आदौ किञ्चिन्न्यूनः ।

सर्व एते तालपत्रात्मकाः केरलीयलिपयश्चतुश्शतवर्षवृद्धाश्च ।

एतद्व्याख्यानरत्नद्वयसंवलितस्य **काव्यप्रकाशस्य** प्रथमो भागः पञ्चमोल्लासान्त एष इदानी प्रकाश्यते; अनतिचिरेण तु भागान्तरमपि प्रकाशयिष्यते ।

अनन्तशयनम्,
४-११-१९२५.

रा. हरिहरशास्त्री.

विषयानुक्रमणी ।

---

षडक्षरं जपन् मन्त्रमहर्निशमनाकुलम् ।
विश्वरूपमरूपं तं दृष्टवानस्मि रूपिणम् ॥ १७ ॥
शङ्खचक्रगदापद्मशार्ङ्गासिशरखेटकैः ।
श्रीवत्सकौस्तुभापीतकौशेयैर्वनमालया ॥ १८ ॥
किरीटहारकेयूरकुण्डलादिविभूषणैः ।
अलङ्कृतमुदाराङ्गमप्रमेयं सुरोत्तमम् ॥ १९ ॥
दिव्यरूपं खगारूढं दिव्यगन्धानुलेपनम् ।
सहस्रादित्यसंकाशं दुर्निरीक्ष्यं[1] सुरासुरैः ॥ २० ॥
ऋग्यजुस्सामजैर्मन्त्रैः स्तोत्रैश्च विविधैरपि[2] ।
प्रसाद्यैनं ततो भक्त्या व्यज्ञापयमहं पुनः ॥ २१ ॥
भगवन्! देवदेवेश! वासुदेव! जगत्पते! ।
तज्ज्ञानं मेऽनुगृह्णीष्व येन स्यात् कृतकृत्यता ॥ २२ ॥
इत्युक्तो भगवान् प्रीतः प्राह गम्भीरया गिरा ।
दिष्ट्या ते वत्स! धीः शुद्धा सुमत्याख्या तवामृषा ॥ २३ ॥
परितुष्टोऽस्मि भद्रं ते तस्माद् वक्ष्यामि ते हितम् ।
शृणु त्वं दीक्षितो भूत्वा पूर्वमीश्वरसंहिताम् ॥ २४ ॥
ईश्वराद् ब्रह्मणः पश्चात् तथैव ब्रह्मसंहिताम् ।
मद् विष्णुसंहितां श्रुत्वा ततो ज्ञानमवाप्स्यसि ॥ २५ ॥
त्रयो मन्त्रास्त्वया जप्ताः शिवस्य ब्रह्मणो मम ।
तस्मादनुग्रहेणापि त्रिभ्यो भाव्यं तव क्रमात् ॥ २६ ॥
इत्युक्त्वान्तर्हिते देवे स्मृतः प्रादुरभूच्छिवः ।
स नतं प्राह मां प्रीतो विष्णूक्तं क्रियतामिति ॥ २७ ॥

---

१. 'क्ष्यं' घ. पाठः. २. 'विभुम् ॥' ख. ग. पाठः.

सम्प्रदायप्रकाशिनी

श्रीचक्रवर्त्तिकविना सम्प्रदायप्रकाशिनी ।
टीका काव्यप्रकाशस्य बृहतीयं विरच्यते ॥
नेह सन्तन्यतेऽस्माभिर्वृथा[1] सन्दर्भडम्बरः ।
व्याख्येयवस्तुयाथात्म्यप्रकाशैकपरायणैः ॥

साहित्यचूडामणिः

भद्रं पक्ष्मलयन्तु वो नरहरेरक्षुद्रशौर्या नखाः
स्तोकोन्मुद्रितपारिभद्रकलिकापाण्डित्यपाटच्चराः ।
ये गर्वोच्छ्वसदिन्दिरास्तनतटीकाठिन्यसर्वंसहाः
क्रीडाकैतकपत्रलेखमलिखन्नेकातपत्रं द्विषम् ॥

प्रणौमि क्वणदोङ्कारमणिघण्टाविभूषिताम् ।
कविलोककुटुम्बस्य कामधेनुं सरस्वतीम् ॥

अद्वितीयसुखोल्लेखामवधूतनियन्त्रणाम् ।
सर्वंसहचमत्कारां सृष्टिं सारस्वतीं स्तुमः ॥

जयन्ति कृतिनः सन्तो देशान्तरमहाद्रुमाः ।
चारु सारस्वतं येषां कर्पूरमिव पच्यते ॥

शिक्षयन्नद्भुतां रेखां काव्यादर्शलिपिक्रमे ।
मध्ये मध्ये महाचार्यो दण्डी भीषयते कवीन् ॥

वामनस्य तदुत्तुङ्गं पदमुन्नतिशालिनः ।
प्रसूते पावनीं वृत्तिं गङ्गामिव कविप्रियाम् ॥

वक्रानुरञ्जनीमुक्तिं चञ्चूमिव मुखे वहन् ।
कुन्तकः क्रीडति सुखं कीर्त्तिस्फटिकपञ्जरे ॥

उद्भटेनापि नम्रेण नायकेनोपलालितः ।
हृद्यो भाम इव स्त्रीणामल्पारम्भोऽपि भामहः ॥

अतिलोकमलङ्कारमाबिभ्रदमृतस्रुतम् ।
आर्यानुरागी सर्वज्ञः सत्यं रुद्रः स रुद्रटः ॥

1. 'र्थं' ग. पाठः.

सम्प्रदायप्रकाशिनी

सन्तो मामनुगृह्णन्तु येऽधिका ये च मे समाः ।
अन्ये यथेष्टं चेष्टन्तां तानहं वेद्मि तत्त्वतः ॥

वस्तुनिर्देशमेवेष्टदेवतानुसन्धानात्मकमभिसन्धायाह वृत्तिकारः—ग्रन्थारम्भ इत्यादिना। ग्रन्थस्याविघ्नेन परिसमाप्तिः प्रचयावाप्तिश्च विघ्नानां विघातः। समुचितेत्यनेनेष्टत्वे सत्यप्यधिकृतायां देवतायां प्रतिपत्तिगौरवार्हत्वमनुसन्धत्ते । काव्यमीमांसाशास्त्रारम्भे हि कविवाग्रूपा देवतैवाधिकृतेति सम्यगुचिता । परामृशति नमस्कर्तव्यत्वेनानुसन्धत्ते ।

साहित्यचूडामणि

भारतस्य प्रयोगस्य प्रणेता शिक्षितोत्तरः ।
वसत्यज्ञातमद्यापि क्लीव शोच्यो धनञ्जयः ॥

पक्षपातेन रमते राजहंसो विवेकवान् ।
महतां मानसाम्भोजे भोजः कीर्त्या विशुद्धया ॥

लोचनेनैव जानन्ति लोके ये केचन ध्वनिम् ।
भुजङ्गा एव ते किन्तु वमन्त्यमृतमाननैः ॥

रसामृतनदीमग्ने ध्वनिकारे महागुरौ ।
अनुमायापि महिमा काव्यगोष्ठी न मुञ्चति ॥

तावदुद्घाट्यते तत्र यावद्यत्रोपयुज्यते ।
नहि रत्नपरीक्षायां पाणौ सामुद्रलक्षणम् ॥

प्रसङ्गानुप्रसङ्गेन कुत्र संगच्छते न किम् ।
मृत्तिकापि कुलालस्य ब्रह्मविद्यां विगाहते ॥

उपोद्घातो विवेकश्च वृत्तेः शब्दार्थयोर्द्वयोः ।
श्रेष्ठमध्यकनिष्ठानां कार्याणामनुशासनम् ॥

दोषाणां निस्तुषा चिन्ता गुणत्रयविनिर्णयः ।
वागर्थभूषाशिक्षेति दशोल्लासा इह क्रमात् ॥

---

१. 'वमभिस' क. ख. पाठः.

नियतिशक्त्या नियतरूपा, सुखदुःखमोहस्वभावा,

सम्प्रदायप्रकाशिनी

**नियत्तीति**। नियतिर्नियामिका शक्तिः। यदुक्तं तान्त्रिकैः—'नियतिर्नियमनरूपे'ति। परतन्त्रशब्दोऽयमायत्तमात्रवचनः, यथा मत्परतन्त्रस्त्वत्परतन्त्र इति। अतो नान्यपदेन पौनरुक्त्यम्। आदधती तेषु तेषु वस्तुषु नूतनत्वेन निदधती न पुनः कुर्वतीति व्याख्येयं, निर्मितिं कुर्वतीति पौनरुक्त्यप्रसङ्गात्। जयति विश्वस्मादुत्कृष्यते।

अत्रार्थसामर्थ्यात् प्रतियोगित्वेन स्फुरन्तीं ब्रह्मणो निर्मितिं शब्दमारोप्य व्याचष्टे — **नियतिशक्त्येत्यादि**। सुखदुःखमोहाः सत्त्वादिगुणवृत्तयः। विश्वं तत्स्वभावमिति सांख्याः। कारणपरतन्त्रे-

साहित्यचूडामणिः

ध्वनिमर्यादया यत्र काव्यस्यार्थः परीक्ष्यते।
उल्लेखं काञ्चनस्येव निकषोपलरेखया॥
कुशलस्य क्रियौचित्यं खलेन यदि शिक्ष्यते।
बिम्बमप्यम्बरमणेर्भस्मना परिशोध्यताम्॥

**अथ** वृत्तिकारः स्वकर्तृकाः कारिकाः परीक्षितुकामो विशिष्टविद्वज्जनानुष्ठितमादिवाक्यवर्तिनं मङ्गल्यमितिकर्तव्यताविशेषं परस्य व्याख्यातुं पीठिकां प्रतिष्ठापयति — **ग्रन्थारम्भ** इति। इष्टदेवतानमस्कारः शिष्टप्रयुक्तो मङ्गलाचार इत्येतावन्मात्रसन्तुष्टखण्डिकोपाध्यायप्रस्थानातिक्रमेणाह — **समुचितेति**। अभिमतविषयत्वादिष्टत्वमविगीतम्। समुचितत्वं तु काव्यलक्षणारम्भे सरस्वतीलक्षणायाः प्रणन्तव्यत्वात्। परामृशति अनुसन्धत्ते। परामर्शो नाम विश्वव्यवहारप्रथमनिबन्धनस्य प्रकाशस्य प्राणप्रदायी स्फटिकमुकुराद्यवच्छिन्नप्रकाशसाधारणजडिमदोषप्रसङ्गविघटनपटिष्ठः पारमार्थिकपुरुषार्थोपयोगी स्वभावः। उक्तं हि —

१. 'बकमि' ख. ग. पाठः.

**परमाण्वाद्युपादानकर्मादिसहकारिकारणपरतन्त्रा, षड्रसा न**

सम्प्रदायप्रकाशिनी

**स्येतत् प्रत्येकमभिसम्बध्यते। परमाण्वाद्युपादानकारणपरतन्त्रा कर्मादिसहकारिकारणपरतन्त्रा। आदिशब्दद्वयेन द्व्यणुकादि कालादि चोपसंगृह्यते। अयं वैशेषिकादिमतोपन्यासः। नवरसरुचिरामित्यत्र व्यतिरेकद्वयं प्राधान्येन विवक्षितम्। अतो वाक्यं विभिद्य व्याचष्टे — षड्रसा न च हृद्यैव तैरिति। रसा मधुरादयः। मधुरव्यतिरिक्तेन रसा-**

साहित्यचूडामणिः

"स्वभावमवभासस्य विमर्शं विदुरन्यथा।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः॥"

इति। तन्मयः प्रणामपरिचर्याप्रभृतिरखिलो देवतोपचार इत्यभियुक्ताः। विघ्नन्त्यभिप्रायमिति विघ्ना आध्यात्मिकादयो भावविशेषास्तदधिष्ठातारो भूतविशेषाश्च। तेषां विघातं व्युदासं सम्पादयितुम्।

व्यतिरेकं व्याख्यातुमन्वयमुखेनोपक्रमते — **नियतिशक्त्येति**। नियतिस्तत्त्वविशेष एव शक्तिः अर्थादीश्वरस्य, तया नियतमन्योन्यासङ्कीर्णव्यवहारतया व्यवस्थापितं रूपमाकारो यस्याः। एतेन कृतशब्दो व्याख्यातः। प्रयोगकरणभूतायाः पारमेश्वर्या नियतेः प्रयोज्यस्वभावस्य नियमस्य च पृथगुपादातव्यत्वात्। अन्यथा प्रमुख एव पुनरुक्तप्रायग्रन्थघट्टोल्लङ्घनप्रयासः। सत्त्वरजस्तमःप्रयोज्याश्चित्तवृत्तयः सुखदुःखमोहाः, येषु सांसारिकव्यवहारः पर्यवस्यति। यथोक्तं —

"संविन्मार्गोऽयमाह्लाददुःखमोहैस्त्रिधा स्मृतः"

इति। स्वभावशब्देन मयडर्थं व्याचष्टे। ह्लादः स्वविश्रान्तिलक्षण आनन्द एकः प्रकृतो यस्याम्। परमाण्वादीत्यत्रादिपदेन दर्शनभेदाद् ब्रह्मप्रधानप्रभृति परिगृह्यते। कर्मादीत्यत्र देशकालादि। उपादानं समवायिकारणम्। नन्वनन्यतन्त्रामित्येतावदुच्यताम्, अपरतन्त्राम् इति वा, किमुभयोरुपादानेनेति चेत्। सत्यम्। अन्यथा काव्यसृष्टौ कवेः परतन्त्रीकृताशेषविभावादिप्रपञ्चं स्वातन्त्र्यमनुद्रेचितं स्यात्। तथोक्तम् —

१. 'कदेशाः संगृह्यन्ते। अ' ग. पाठः. २. 'कम' क. घ. पाठः. ३. 'वि' क. पाठः.

च हृद्यैव तैः, तादृशी ब्रह्मणो निर्मितिर्निर्माणम्। एतद्विल-

सम्प्रदायप्रकाशिनी

न्तरेणाहृद्या चेत्येवकाराशयः। अथ व्यतिरेकं प्रकृतनिर्मितौ योजयति—एतद्विलक्षणा हि्वति। तथाहि—नास्या नियमः कश्चित्, 'कमलमनम्भसी'त्यादावनियमसहस्रसंदर्शनात्। न च दुःखमोहात्मकत्वम्, अलौकिकसुखप्रकाशघनत्वात्। नाप्यन्यपारतन्त्र्यं, प्रतिभामात्रप्रवृत्तत्वात्। न चात्र षडेव रसाः, शृङ्गारादिनवरसनैरन्तर्यात्। न चैतेष्वन्यतमेनाप्यरुचिरत्वं, बीभत्सेनापि नामामृतायमानत्वात्। अतो जयति। विश्वं हि ब्रह्मनिर्माणान्तर्वर्ति। अतो विश्वोत्कर्षित्वमुपपद्यत इति भावः। ननु नमस्कारप्रस्तुतावुत्कर्षकथनं न सङ्गच्छत

साहित्यचूडामणिः

"अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते॥"

इति। यदाह ध्वनिकारः—

"भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।
व्यवहारयति यथेच्छं सुकविः काव्ये स्वतन्त्रतया॥"

इति। अन्यत्र परतन्त्रा न भवति, किन्तु कविविषय एव। असूर्यंपश्या इतिवत् समासः। नचेति। एकविधिर्द्विविधिस्त्रिविधिरिति वक्ष्यमाणया युक्त्या नवसंख्याकत्वं रसानां तत्प्रयुक्ता सृष्टेः स्पृहणीयता च विधीयते रक्तं पटं वयेतिवत्। भोक्तॄणामभिलाषभेदाद् अम्लादौ कश्चिदेव कस्मैचिद् रोचते, न सर्वः सर्वस्मै। तादृशी नियतिनियमान्वितेत्यादिरूपा। व्याख्यातमन्वयं व्यतिरेके विश्रमयति—एतद्विलक्षणेति। कविवाङ्निर्मितिरिति समासेन कारिकावर्तिनं व्यासं व्याचष्टे। अन्यथा योजनान्तरमनभिलषितमपि शक्यसमर्थनं स्यात्— किं कवेर्निर्मितिं कुर्वाणा भारती जयति उत यथोक्तां निर्मितिं कुर्वाणा कविसम्बन्धिनी भारतीति। एवं कारकप्रपञ्चं परीक्ष्य तं क्रियाभागे घटयति—अत इति। यत एतदीया सृष्टिर्नियतिनियन्त्रणातिक्रान्ता, यतः सुखैकस्वभावा, यतः परतन्त्रवार्तानभिज्ञा, यतश्च शृङ्गाराद्यलौकिकविविधरसवैचित्र्यचारुचमत्कारा, अत एव जयति।

१. 'च' क. पाठः. २. 'स्रद' क. ख. पाठः. ३. 'चिकर' क. पाठः. ४. 'प्यमृ' ख. ग. पाठः. ५. 'नं कुत्रोपयुज्यत' ख, 'नमस्त्रोपयुज्यत' ग. पाठः. ६. 'तिः स' क. पाठः. ७. 'क्ष्य कि' ख. पाठः.

क्षणा तु कविवाङ्निर्मितिः । अतो जयति । जयत्यर्थेन च नमस्कार आक्षिप्यत इति तां प्रत्यस्मि प्रणत इति लभ्यते ॥

इहाभिधेयं सप्रयोजनमित्याह

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥ २ ॥**

सम्प्रदायप्रकाशिनी

इत्यत आह — जयत्यर्थेन चेति । आक्षिप्यते सामर्थ्यादानीयते । इतिर्हेतौ । यतो विश्वोत्कर्षिणी, अतस्तां प्रत्यस्मि प्रणत इत्यस्यार्थस्य लब्धिः । इह नियतिकृतेत्यादौ विमतानेकदर्शनोपन्यासः यत्र यत्र दर्शने यादृग्विश्वं सर्वस्मादेवास्मात् वैलक्षण्यं दर्शयितुं, काव्यस्य सर्वदर्शनपार्षदत्वं द्योतयितुं चेत्युपपन्नतमः । यत्तु सान्धिविग्राहिको 'नियतिः कर्मापरपर्याय इति व्याख्यत्, तत् 'कर्मादिसहकारिकारणे'त्यादिवृत्तिग्रन्थतात्पर्यपर्यालोचनविधुरत्वादविचारिताभिधानम् । अत्र चादिसूत्रे वस्त्वलङ्काररसस्वरूपः प्रतिपिपादयिषितस्त्रिस्कन्धकोऽर्थः प्रतीयमानो ग्रन्थकृतोपक्षिप्तो मन्तव्यः । तथाहि—जयत्यर्थेन नमस्कारलक्षणं वस्तु, ब्रह्मनिर्मितेः शब्देनानुपादानाद् व्यतिरेकालङ्कारः, देवताविषया रतिश्च व्यङ्ग्यतया प्रथते ॥ १ ॥

अथ द्वितीयसूत्रमवतारयति — इहेति ।

साहित्यचूडामणिः

सर्वोत्कर्षो हि जयतेरकर्मकस्यार्थः । ततश्च किं फलं सम्पन्नमित्यत आह — जयत्यर्थेनेति । उपास्यदेवतोत्कर्षो हि न कचिदुपासकजनप्रह्वीभावमन्तरेणावतिष्ठते । एवं नम इत्यादावेतद्विपर्ययः पर्यालोचनीयः ॥ १ ॥

अथ सर्वाकारस्वीकार्यामभिधेयस्य प्रयोजनवत्तां प्ररोचयति —इहेति । काव्यं खल्वत्र प्रकरणेऽभिधेयम् । प्रकरणशास्त्रकाव्ययोर्यथाशास्त्रमभिधानाभिधेयभावः सम्बन्धः । काव्यप्रयोजनयोः कार्यकारणभावः । श्रोतृवक्त्रोर्व्युत्पाद्यव्युत्पादकभावः । काव्यस्वरूपपरिज्ञानं प्रयोजनं, तस्य च प्रयोजनं काव्यस्वरूपलाभः

१. 'त' क. ख. पाठः २. 'स्माद्' क. पाठः. ३. 'रिषद', ४. 'सरू' ग. पाठ. ५. 'कः प्र', ६. 'नोऽर्थ प्र' ख. ग. पाठः.

कालिदासादीनामिव यशः, श्रीहर्षादेर्धावकादीनामिव धनं, राजादिगतोचिताचारपरिज्ञानम्, आदित्यादेर्मयूरादीनामिवानर्थनिवारणं, सकलप्रयोजनमौलिभूतं समन-

सम्प्रदायप्रकाशिनी

काव्यं यशस इति । कृत् करणम् । वित् वेदनम् । युक् योजनम् । भावे क्विप् ।

क्रियाभिसम्बन्धस्वारस्याय विभक्तीर्विपरिणमयन् व्याचष्टे—कालिदासादीनामिव यश इत्यादिना । धावको रत्नावलीनाटिकाप्रणयनसहायः । राजादीत्यादिशब्दाद् गुरुमित्रकान्तादिपरिग्रहः । सकलेति । निर्वृतित्वादेव सकलप्रयोजनमौलिभूतत्वं, यशःप्रभृतेस्तां प्रति शेषत्वात् । विगलितेति परत्वप्रकाशनम् । नहि लौकिके सुखे वेद्यान्तरं न प्रतीयते । यथा चात्र वेद्यान्तरविगलनं, तथा चतुर्थे दर्शयिष्यते । करोतीति प्रतिवाक्यं समन्वयः । धर्माद्युपदेशलक्षणं तु प्रयो-

साहित्यचूडामणिः

तस्यापि प्रयोजनम् अनन्तरमनुक्रंस्यमानाः कीर्त्यादयः । तदुपरि न प्रयोजनम्, अपेक्षाया अभावात् ॥

काव्यमिति । क्विब्विदादयः सम्पदादिकिबन्ताः पादपूरणमात्रप्रयोजना इत्युत्तानबुद्धयः । न खलु मतिमान् ग्रन्थकृत् 'काव्यं यशसेऽर्थाय व्यवहाराय कुशलेतरक्षतये । सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशाय' इति भणितुं न प्रगल्भते । किं तर्हि, अर्थं कर्तुं व्यवहारं वेदयितुम् उपदेशं च योक्तुं प्रभवति काव्यमिति तस्य करणीयज्ञापनीयाद्यनेकार्थक्रियासामर्थ्यं समर्थ्यत इत्यलं कोमलहृदयकविजनकदर्थनेन । यशसे यशः प्रख्यापयितुम् । शिवेतरस्यामङ्गलस्य क्षतिं कर्तुम् ।

राजेति । पुरुषार्थव्युत्पत्तिमपि फलति । उचितेति । इदमेव काव्यव्यवहारस्य सर्वस्वं, यदौचित्यलक्षणं वस्तु प्रमाणकक्ष्यायां निक्षिप्यते । तच्च रसगोचरमेवेति निश्चयः । सकलप्रयोजनेति । उद्देशक्रमे पार्यन्तिकस्य प्रयोजनयुगलस्य प्राधान्यं प्रख्याप्यते, तत्रापि तत्त्वचिन्तायामानन्दस्य । यतः

१. 'स्तं' क. घ. पाठः. २. 'त्वा' क. पाठः. ३. 'ति वाक्यशः स' ख. ग. पाठः.

न्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं, प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः मित्रसम्मितार्थतात्पर्यव-

सम्प्रदायप्रकाशिनी

जनं यथा कान्तासम्मितत्वेन करोति, तथोपदर्शयितुमाह — प्रभुसम्मितेत्यादि । यानि हि वेदादीनि शासनाच्छास्त्राणि, तान्युपदेश्यानामिष्टानिष्टपर्यालोचननैरपेक्ष्येण प्रभुवदुपदिशन्ति, शब्दप्रधानकत्वात् । मित्रसम्मितेत्यादि । ये पुनरितिहस्माहेति पुरावृत्तोपवर्ण-

साहित्यचूडामणिः

कीर्त्यादिभिरपि कवेः प्रीतिरेवोत्पाद्या । इतरथा प्रभुसम्मितेभ्यो वेदादिभ्यः सुहृत्सम्मितेभ्यश्च पुराणादिभ्यो व्युत्पत्तिहेतुभ्यः कीदृगस्य कान्तासम्मितत्वरूपो विशेषः । यदाहुः—

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥"

इति । सामनन्तर्येण सद्यःशब्दो व्याक्रियते । परा या लोकातिशायिनी निर्वृतिरानन्दस्तस्यै । विगलितानि जीर्णपर्णप्रक्रियया परित्रुटितानि वेद्यान्तराणि तदेकव्यतिरिक्ताः प्रमेयभागा यत्र । प्रभ्विति । इह खलु सर्वोऽपि वाङ्मय उपदेशहेतुः संक्षेपात् त्रिधा—प्रभुसम्मितः सुहृत्सम्मितः कान्तासम्मितश्चेति । तत्र प्रभुणा साम्मित्यं शब्दप्राधान्याद् आज्ञामात्रे तात्पर्यात्, अर्थप्राधान्यान्मित्रेण, उभयस्मिन्नप्यप्राधान्यात् कान्तया । अध्ययनमात्रादभ्युदयनिःश्रेयसश्रवणात्, क्वचिदपि पाठस्खलनशङ्कायामसदस्यत्वप्रसङ्गात् प्रत्यवायलक्षणामङ्गलश्रवणाच्च वेदानां शब्दार्थयुगलमेलके शाब्द एव भागे प्राधान्यं नार्थे । इत्थं पुराणानामर्थवादानुप्राणनत्वादार्थ एवांशे प्राधान्यं न शाब्दे । अनुभयप्रधानं काव्यं, शब्दार्थोभयातिलङ्घनेन ध्वननलक्षणे व्यापारविशेषे तस्य प्रपञ्चयिष्यमाणत्वात् । वेदा आदय उपजीव्यतया मुख्या येषाम् । एवं पुराणादीत्यत्रापि । अथ कथं शब्दार्थयोरुभयोरपि युगपदप्राधान्यम्, एकतरप्राधान्ये तदन्यतरस्य गुणीभावावश्यंभावादित्याशङ्क्याह—रसेति । रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्य इति वक्ष्यमाणक्रमेण व्यङ्ग्यत्वमात्रस्वभा-

त्पुराणादीतिहासेभ्यश्च शब्दार्थयोस्तु गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत् काव्यं लोकोत्तरवर्णनानि-

सम्प्रदायप्रकाशिनी

नरूपाः पुराणादय इतिहासास्ते मित्रवद्, अर्थतात्पर्यवत्त्वात् । शब्दार्थयो[1]स्तु गुणभावेनेत्यादि । तदुभयविलक्षणं तु यत् काव्यं तत् सुन्दरवस्तूपवर्णनेन सरसतामुत्पाद्योपदे[2]श्यमभिमुखीकुर्वत् प्राणवल्लभाप्रख्यतया मृदुललितसरसहृदयङ्गमं दुर्लङ्घतयोपदिशति, शब्दमर्थं चोपसर्जनीकृत्य रसाङ्गभूते व्यञ्जनव्यापार एव प्रवणत्वात् । रघुवंशप्रमुखं हि काव्यमेकवाक्यतया निष्कृष्यावधारितं रामादिवद् वर्तितव्यं न

साहित्यचूडामणिः

वानां रसानामङ्गभूतः परिबर्हतया स्थितो यो व्यापारः व्यञ्जनाकारा शक्तिः तत्र प्रवणता तात्पर्यं तया विलक्षणं प्रभुसम्मितादिसकाशाद् विशिष्टं यत् काव्यम् । यदाहुः —

"शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग् विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधी[3]र्भवेत् ।"

इति । व्यापार्यप्राधान्यपर्यवसानाभिलाषादयं व्यापारप्राधान्याभ्युपगमः नान्यथा । दशमे चैतदवगमयिष्यते । किञ्च व्यापारप्राधान्ये व्यापारकशब्दभेदसिद्धिः । वस्तुचिन्तायां शास्त्रादेरपि काव्यमुखप्रेक्षितया कार्यकारित्वमित्युपनिषत् । यथा हि—

"स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥"

इति । प्रसङ्गात् काव्यशब्दं निर्वक्ति — लोकोत्तरेति । इन्दुमन्दानिलादीनां भावानां या लोकस्वभावातिलङ्घिनी वर्णना शिल्पशालिनी भणितिः अत्र निपुणो व्युत्पन्नः । उक्तं च—

"प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।
तदनुप्राणनाजीवद्वर्णनानिपुणः कविः ॥"

१. 'योर्गुण' ख. ग. घ. पाठः. २ 'म' क. ख. पाठः. ३. 'गी' क. पाठः.

पुणकविकर्म तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च कवेः सहृद-

सम्प्रदायप्रकाशिनी

रावणादिवदिति[5] बह्वीभिरुपपत्तिभिः सर्वप्रकाराभिराममुपदिशति । अवान्तरप्रकरणशोऽपि विचारितं महाराजस्य दिलीपस्य पूज्यायां धेनौ प्रमादादपि पूजाव्यतिक्रमे सन्ततिप्रतिबन्धं, दशरथस्य मृगयाव्यसनेन देहावसानसमये शापहेतुकां[२] महासुतवियोगविपदम्, अग्निवर्णस्यातिकामितया व्यापदं च हेयतया, धेन्वाराधनादिना च सुकृतेन[३] कल्यसन्तानादिकल्याणोपचयं चोपादेयतयोपदिशतीति[४] ।

साहित्यचूडामणि

इति । कौति शब्दायते विमृशति रसस्वभावादिकमिति कविः तस्य कर्म । कान्तेव वल्लभया सदृशं कृत्वा । तत्र साधर्म्यमाह—सरसतेति । सारस्याकारचमत्कारार्पणेनाभिमुखीकृत्य अर्थादुपदेश्यं जनं व्यतिरिक्तवस्तुवासनाव्युदासपूर्वकं रसचर्वणामात्रानुप्राणनामुपकल्प्य रामादिवद् वर्तितव्यमित्युपदेशं करोति । तदिदं पुण्ड्रेक्षुभक्षणाद् वेतनवित्तलाभः यत् काव्यश्रवणाद् व्युत्पत्तिसिद्धिः। उपायक्रमेण प्रवृत्तस्य सिद्धिः अनुपायद्वारा विनाश इति नायकप्रतिनायकमुखादर्थानर्थोपायव्युत्पत्तिरत्रोपदेश्या । तथाह —

"कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् ।
आह्लाद्यमृतवत् काव्यमविवेकगदापहम् ॥"

इति । इवशब्दः सम्मितशब्दं व्याकर्तुम् । नायकवद् वर्तितव्यं न प्रतिनायकवदित्यन्वयव्यतिरेकाभ्यामुपदेशस्य स्थैर्यमुद्घाट्यते । कवेः[६] सहृदयस्चेति । यौ काव्यसृष्टिनिर्वाहकौ तयोर्द्वयोरपि । यदुक्तं लोचने —

१. 'दित्युपदेश च ब' क. घ पाठः. २. 'क' ङ. ख. घ. पाठः. ३. 'न स' ग. घ. पाठः. ४. 'ति । क' ख ग पाठः ५ 'वि:', ६. 'श्चेति' क, ख पाठः.

यस्य च यथायोगं करोतीति सर्वथा तत्र यतनीयम् ॥ २ ॥

सम्प्रदायप्रकाशिनी

कवेः सहृदयस्य चेत्यधिकारिकथनम् । यथायोगमिति । योगो योग्यता तामनतिक्रम्य । अत्रायमाशयः— यशोऽर्थोऽनर्थक्षतिश्चाविशेषेणोभयोरपि । व्यवहारोपदेशौ तु ग्रथनादर्वाक् कवेः, अपरिज्ञातव्यवहारोपदेशस्याकवित्वप्रसङ्गात् परस्तात् । सहृदयस्य निर्वृतिकाले कविरपि सहृदय एवेति द्वयोरपि परस्तादेवेति । काव्यं यशस इत्युक्त्वा विधावपर्यवसानादपरिपूर्णं वाक्यं विधिपर्यवसानेन पूरयति — इति सर्वथेत्यादिना । सर्वथेति । एषु विशिष्टेषु प्रयोजनेष्वन्यतमासिद्धावपि यतनीयं समुदायासिद्धौ यतनीयमेवेति भावः । अत्र सान्धिविग्रहिकः इति सर्वथेत्या[1]दिवाक्यशेषमग्रिमकारिकासङ्गत्यर्थतया यदवोचत् तदयुक्तम् । तथाहि —

"वाक्यं सर्वं परार्थत्वाद् बोधनीये हि वस्तुनि ।
नानुत्पाद्य प्रवृत्तिं वा निवृत्तिं वोपशाम्यति ॥"

इति नीत्या प्रवर्तकत्वाभावे पूर्वकारिकाया वाक्यत्वमेव न परिपूर्यते । कथमग्रिमकारिकासङ्गत्यर्थता[3] वाक्यशेषस्य सङ्गच्छताम् । नचैतदनुवादरूपं वाक्यम् । अधिकारिप्रवर्तनायैव प्रयोजनादिप्रतिपादनपरत्वात् । एवमादिषु व्याख्यातारतम्यं स्वयमेव सचेतसो विचिन्वन्तु । नास्माभिः प्रतिकारिकमुद्घाट्यते ग्रन्थविस्तरभयादित्यलम् ॥ २ ॥

साहित्यचूडामणिः

"सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयताम्"

इति । ननु किमुभयोरपि प्रत्येकं प्रयोजनषट्कलाभः, नेत्याह — यथायोगमिति । योगो युक्तिरौचित्यं तमनतिक्रम्य । कीर्त्तिरर्थोऽनर्थप्रतीकारश्च कवेः, व्यवहारवेदनं परानिर्वृतिः कान्तासम्मितोपदेशश्च सहृदयस्य । प्रक्रान्तं प्रबन्धकार्थमुपसंहरति — इतीति । एकैकस्मादपि फलात्, किमुत फलषट्कात् । तस्मिन् ऐहिकामुष्मिकफलप्रदायिनि काव्य उद्यन्तव्यम् । यथाहुः—"काव्यं सद् दृष्टादृष्टार्थं प्रीतिकीर्त्तिहेतुत्वाद्" इति क्रमे,

१. 'दिना वा' ग. पाठः. २. 'क्यविशे' ख. पाठः. ३. 'तया वा' क. ख. घ. पाठः. ४. 'क्यविशे' क. घ. पाठः. ५. 'षः स' ख. पाठः.

अस्य कारणमाह —

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥**

**शक्तिः कवित्वबीजरूपः संस्कारविशेषः । यां विना**

सम्प्रदायप्रकाशिनी[1]

**एवं प्रयोजनकथनेन प्ररोचितयोरधिकारिणोरुपायजिज्ञासायां सूत्रं — शक्तिरित्यादि । शक्तिर्निपुणता अभ्यास इति त्रयमेतत् सङ्घातवृत्ति काव्यस्य हेतुरिति पिण्डितार्थः ।**

**तदिदं व्याचष्टे — शक्तिः कवित्वबीजेत्यादिना । संस्कारविशेषः, बुद्धेरिति शेषः । यामिमां शक्तिमभिव्यक्तां प्रतिभामाचक्षते । तथाहि —**

**"स्मृतिर्व्यतीतविषया मतिरागामिगोचरा ।**
**बुद्धिस्तात्कालिकी ज्ञेया[1] प्रज्ञा त्रैकालिकी मता ॥**

साहित्यचूडामणिः

"प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।
अकीर्त्तिवर्तनीं चैव कुकवित्वविडम्बनाम् ॥
कीर्त्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्त्तिं च निरालोकनरकोद्देशदूतिकाम् ॥"

इति ॥ २ ॥

एवं काव्यस्य प्रयोजनभूतं कार्यमालोच्य कारणसूत्रमासूत्रयति — अस्येति ।

कवित्वस्य लोकोत्तरवर्णनानैपुणलक्षणस्य बीजरूपो धानास्थानीयः संस्कारविशेषः कार्यकल्पनीया काचिद् वासना शक्तिः । उपहसनीयं[2] व्रीडावहम् । यथा —

"नाकवित्वमधर्माय मृतये दण्डनाय वा ।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥"

१. 'प्रोक्ता प्र' ख. ग. पाठः. २. 'पी' ख. पाठः.

काव्यं न प्रसरेत्, प्रसृतं वोपहसनीयं स्यात् । लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां,

सम्प्रदायप्रकाशिनी

प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः ।
द्वे वर्त्मनी गिरो देव्याः शास्त्रं च कविकर्म च ॥
प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम् ।"

इति । नन्वप्रत्यक्षा शक्तिः कथं निश्चीयत इत्यत आह — **यां विनेत्यादि** । कस्यचिद् बुद्धिमतः स्वभ्यस्तस्यापि न चतुष्पदीमात्रेऽपि सन्दर्भप्रसरः । कस्यचित् प्रभूतोऽपि प्रसरः सहृदयैरुपहस्यते । उभावपि खल्विमौ शक्तिदरिद्रौ । यस्य तु प्रसरोऽनुपहास्यत्वं च सन्दर्भे स शक्तिमानिति यावत् । अतः प्रभूतोऽपि प्रसरः सहृदयोपहास्यश्चेदकाव्यमेवेति सिद्धम् । लोकशास्त्रेत्यत्र लोकशब्दो लोकवद्विस्तृतं लोकवृत्तमुपलक्षयति । लोकानामेवेक्षणस्याशक्यत्वात् । अनेनैवाशयेनोक्तं वामनेन 'लोकवृत्तं लोक' इति । तदेतदभिप्रेत्याह — **स्थावरजङ्गमात्मकलोकवृत्तस्येति** । शक्तिमतो लोकवृत्तपरिज्ञाने सति यानि काव्ये साक्षादुपयोगीनि शास्त्रादीनि तानि विशेषतो दर्शयति — **छन्दोव्याकरणेत्यादिना** । छन्दोऽवच्छेदविशेषः । तेन विना वाचां निबन्धनमेव न स्यादिति प्रथमतो निर्देशः । गद्यकाव्येऽपि छन्दोग्रन्थोऽनुसर्तव्य एव । अथ निबन्धनान्तःपतितानां पदानां परिशुद्ध्यै व्याकरणम् । परिशुद्धेष्वपि पदेषु सन्दर्भानुगुणाननुगुणत्वाविवे-

साहित्यचूडामणिः

इति । लोकस्य वृत्तं विचित्रो हेवाकः, यदवलम्बनात् स्वभावोक्त्यतिशयोक्त्यादयोऽलङ्काराः । एवं "लोको विद्याः प्रकीर्णं च काव्याङ्गानी"ति क्रमेण लोकं व्याख्याय विद्याः प्रस्तौति — **शास्त्राणामिति** । छन्दोविचितेर्वृत्तसंशयच्छेदः । तद्व्यतिरेके वैतालीयादेरनिर्वाहात् । व्याकरणात् सौशब्द्यनिर्णयः ।

१. 'वर्त्म च' क. ख. घ. पाठः. २. 'त्याह' क. घ. पाठः. ३. 'ह्यं', ४. 'या' ग. पाठः. ५. 'म' ख. ग. पाठः. ६. 'च्छन्दोवि' ग. पाठः. ७. 'ष' क. पाठः. ८. 'गन्थोऽनु' ख. ग. पाठः.

काव्यानां च महाकविसम्बन्धिनाम् आदिग्रहणादितिहासादीनां च विमर्शनाद् व्युत्पत्तिः, काव्यं कर्तुं विवेचयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिरिति त्रयः समुदिताः नतु व्यस्ताः तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्नतु हेतवः ॥ ३ ॥

---

सम्प्रदायप्रकाशिनी

चनायाभिधानकोशाः। अथार्थशुद्धये कलाचतुर्वर्गाद्या विमर्शनीयाः। यदाह —

"न स शब्दो न तद् वाच्यं न सा विद्या न सा कला।
जायेत[1] यन्न काव्याङ्गमहो भारो महान् कवेः॥"

इति। काव्यज्ञपदेन कवेः सहृदयस्य च परिग्रहं दर्शयति — **काव्यं कर्तुं विवेचयितुं**[3] **चे**त्यादि। कर्तुरुपदेशेन ग्रथने, विवेचयितुस्तु योजने प्रवृत्तिः। निर्माणे समुल्लासे चेत्युद्भवशब्दार्थ उद्घाटितः। इति शब्दस्यैकीकारद्योतकत्वमाविष्कर्तुमाह — **इति त्रयः समुदिताः न तु व्यस्ता इति**। नतु हेतव इति प्रत्ययस्य संख्याप्राधान्यं दर्शितम्॥ ३॥

साहित्यचूडामणिः

कला नृत्तगीतादयः। महाकविसम्बन्धिनां कुमारसम्भवादीनाम्। इतिहासादीनामित्यादिग्रहणात् बृहत्कथादि। दण्डापूपिकया रामायणभारतादिपरिग्रहः। काव्यस्य करणम् इदंप्रथमिकयोन्मीलनं तत्र कवय एव प्रभवः येषु प्रख्यायाः प्राचुर्यम्। *विचारणं वैचित्र्येण विमर्शः। तत्र सहृदया एव समर्थाः यत्रोपाख्यायाः प्राधान्यम्। पूर्वं कथापरीक्षा, तत्राधिकारावापः, फलपर्यन्ततानयनं, रसं प्रति जागरणं, विभावादिवर्णनायामलङ्कारौचित्यमिति करणम्।

आधानोद्धरणे तावद् यावद्दोलायते मनः।
पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती॥

---

१. 'यते चेन्न' ख, 'यतें य' ग. पाठः. २. 'गुरुः क' ख. ग. पाठः ३. 'चारयि' क. घ. पाठः. ४. 'थ', ५. 'रत्वद्यो' ग. पाठः. ६. 'तप' ख. पाठः. ७. 'द्धा', ८. 'ती ॥ य' क. पाठः.

---

* विचारयितुमिति मूलपाठोऽस्येति प्रतिभाति।

एवमस्य कारणमुक्त्वा स्वरूपमाह —

**तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।**

दोषगुणालङ्कारा वक्ष्यन्ते । क्वापीत्यनेनैतदाह —

**सम्प्रदायप्रकाशिनी**

एवमुपाये ज्ञाते सत्युपेयस्वरूपविवेचनमवसरागतमित्याह — **एवमस्येति** । स्वमसाधारणं रूपं लक्षणमित्यर्थः ।

**तददोषावित्यादि** । शब्दार्थौ धर्मिणौ । अदोषत्वादयो धर्माः । सत्यपि गुणालङ्कारपौष्कल्ये दोषस्य लवोऽप्यकाव्यतायै कल्पत इत्यवश्यहेयत्वेन दोषाणां प्रथममुपादानम् । गुणा रसे समवायिनो धर्माः । अलङ्काराः संयोगवृत्तयः । अनलङ्कृती इति नञीषदर्थे । अनेन गुणालङ्कारयोर्भेदोऽप्यासूचितः । यतः शब्दार्थयोः परिस्फुटगुण-

**साहित्यचूडामणिः**

यत् पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥

इति विचारणं यद् योजनमित्युच्यते । त्रय इति शक्तिव्युत्पत्त्यभ्यासाः । **न त्विति** । हेतुरित्येकवचनस्य विवक्षितत्वात् । **निर्माणे समुल्लासे चेति** । उद्भवशब्दस्य उत्पत्तिः उपरितनं प्रसरणं चार्थ इत्यर्थः यथा भिन्नप्रमेयप्रसर इत्यत्र प्रसरशब्दस्य ॥ ३ ॥

कारिकान्तरं सङ्गमयति — **एवमिति** । स्वम् अनन्यसाधारणमव्यभिचरितं रूपमाकारमाह लक्षणमाहेति यावत् ।

**तदिति** । निर्दोषत्वादिविशिष्टं शब्दार्थयुगलं काव्यमिति संक्षेपः । शब्दार्थौ द्वावेकं काव्यमित्यपूर्वत्वोद्भावनयोक्तिः । तेन कामनीयकशालिशब्द एव काव्यम् अथवा अर्थ एवेति पृथक् पक्षद्वयं प्रतिक्षिप्तं, येन तिलतैलन्यायाद् द्वयोः संभूयाह्लादानिबन्धनत्वम् । यदुक्तं वक्रोक्तौ "न शब्दस्य रमणीयताविशिष्टस्य केवलस्य काव्यत्वं, नाप्यर्थस्य" इति ।

**वक्ष्यन्त इति** । सप्तमादिषु पृथक् प्रपञ्चयिष्यन्ते । नेदानीमेषामवसरः । यद् वक्ष्यति — 'धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायते' इति । **क्वापीति** । निर्दोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति घण्टापथः । किन्तु सर्वं वाक्यं सावधारणमिति युक्त्या यथा दोषशून्यावेव गुणवन्तावेव **शब्दार्थौ**

यत् सर्वत्र सालङ्कारौ, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः। यथा —

सम्प्रदायप्रकाशिनी

योरेव काव्यत्वम्। क्वचित्तु[1] स्फुटालङ्कारविरहे[2]ऽपि[3] न काव्यत्वहानिः। तदिति विशेष्यपदेन प्रथमोल्लासे सामान्यतः चतुर्थो-

साहित्यचूडामणिः

काव्यमित्यवधारणं तथा सालङ्कारावेवेति न पार्यते नियन्तुम्। वयं हि काव्यशोभासम्भावनया स्वैरमलङ्कारान् सहामहे, अलङ्कारनैयत्यं तु न सहामहे। उक्तं हि —

"दोषहानं गुणादानं कर्तव्यं नियमात् कृतौ।
कामचारः पुनः प्रोक्तोऽलङ्कारेषु मनीषिभिः॥

इति। एतत्

"मुख्या महाकविगिरामलङ्कृतिभृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्॥"

इत्यत्र अपिशब्दात् प्रतीयते। यस्मादलङ्कृतिभृतां तदभावशालिनीनामपीति तात्पर्यम्। क्वचित् त्विति। सहृदयैकसंवेदनीये प्रयोगे कविसंरम्भगोचरत्वं स्फुटत्वम्। ननु

"निर्दोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति॥"

इत्यादिवत् किमिति रसान्वितत्वमत्र नोक्तं येन नीरसत्वं काव्यस्यानुमन्येतेति चेत्। न। दोषगुणप्रमाणादेव तत्सिद्धिः। तथा च वक्ष्यति "मुख्यार्थहतिर्दोषो रसश्च मुख्य" इति,

"ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥"

इति,

"उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥"

इति। न च रसचमत्कारस्वभावमलौकिकमर्थं दोषहान्यादिना बहिष्ठेन सह समशीर्षिकया युक्तं परिगणयितुम्। न काव्यत्वहानिरिति। यथा दोषहानादिविरहे काव्यत्वभङ्गः, न च तथालङ्काराभावे।

१. 'तु कदाचित्तु स्फु', २. 'ङ्कृतिवि' क. पाठः. ३. 'हत्वेऽपि' ख.

य: कौमारहर: स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभय: प्रौढा: कदम्बानिला:।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेत: समुत्कण्ठते ॥

सम्प्रदायप्रकाशिनी

दिषु त्रिषूल्लासेषु विशेषतो लक्षयिष्यमाणं काव्यमुद्दिष्टम् । शब्दार्थौ द्वितीयतृतीययो:, दोषा: सप्तमे, अष्टमे गुणा:, नवमदशमयो: शब्दार्थालङ्कारावित्युल्लासदशकार्थ इहोपक्षिप्त: ।

य: कौमारहर इति । कौमारहर: प्रथमपरिभोगेन कौमारमपनीतवान् । मालतीवत् सुरभयः मालतीसुरभय: । कदम्बशब्द इह धूलीकदम्बाख्ये तद्विशेषे वर्तते, यो वसन्ते समुल्लसति । कदम्बमात्रस्य चैत्रक्षपास्वसम्भवात् । य: कौमारेति वाक्यचतुष्टयेऽपि तदूचे रुत्कण्ठाकारणाभाव: अनुत्कण्ठाकारणपौष्कल्यं चोक्तम् । तथापि चेत: समुत्कण्ठत इत्युत्कण्ठालक्षणकार्योत्पत्तिरनुत्कण्ठारूपकार्यानुत्पत्तिश्च अत: साधकबाधकप्रमाणाभावाद् विभावनाविशेषोक्त्यो: सन्देहसङ्कर:। कारणाभावकार्याभावयोश्च विरुद्धोपलब्धिमुखेनाभिधानादस्फुटत्वम् ।

साहित्यचूडामणि:

य इति । एषा हि बाल्य एव क्वचित् कुलशीलादिगुणगणोल्बणे यूनि निगूढनिर्व्यूढाभिलाषाया: पश्चादाचारसंरक्षणार्थम् अज्ञानादिकनीत्या मातापितृभ्यां तेनैव पाणिं ग्राहिताया: कुटुम्बिनीपदमधिवसन्त्या: प्रियसखीसंकथायां प्राचीनवासनावशंवदाया: कस्याश्चिदुक्ति: । कौमारं कुमारीभाव: तस्य हरणमिदंप्रथमिकया सम्भोगोपदेश: । ते चेति चकारेणावधार्यतया कदम्बानिला: समुच्चीयन्ते । अतो न प्रक्रमभङ्ग: । तत्रेति । प्रच्छन्नकामितजयानुशीलिते । सुरतार्थो यो व्यापारो दूतीसंप्रेषणादि: स एव लीलाया: कालविनोदनादिरूपाया विधिरनुष्ठानामिति योजनायां नौपकारशङ्का(?) । रेवारोधो

१ 'चौर्यसु' इति मूलकोशपाठ:. २. 'परिवृते चे' ख. पाठ:. ३. 'इ' क. घ. पाठ:. ४. 'य: । कं' क. पाठ:. ५. 'त' ग पाठ:. ६. 'नुसन्धाना' क. पाठ:. ७. 'नो' क. ख. पाठ:.

अत्र[1] हि स्फुटो न कश्चिदलङ्कारः । रसस्य हि प्राधान्यान्नालङ्कारता ।

सम्प्रदायप्रकाशिनी

तदेतदभिसन्धायाह—अत्र[2] हि स्फुटो न कश्चिदिति । अत्रालङ्कारचर्चास्माभिरलङ्कारसर्वस्वसञ्जीवि[3]न्यामलङ्कारसर्वस्वटीकायां वितत्योपरचितेति तत एवावधार्यम् । ननु विभावादिभिरिह स्फुटमेवाभिव्यज्यते रसः । अतः कथं न रसवद[4]लङ्कार इत्यत आह—रसस्य हीति । यत्र रसो गुणीभवति, तत्रासौ रसवदलङ्कारः । प्राधान्ये त्वलङ्कार्य एव नत्वलङ्कार इत्याशयः । यथा चैवं व्यवस्था तथा पञ्चमे दर्शयिष्यति ॥

साहित्यचूडामणिः

महान् विषयः, वेतस्या बालवञ्चुलात्मनस्तरोर्मूलस्थलमवान्तरभूतः । अनन्यत्रभावो विषयार्थः । सप्तमीपरम्परया स्मर्यमाणस्य रमणीयस्यार्थस्य वैचित्र्यमासूत्र्यते ।

निरलङ्कारतां विवरीतुमाह—अत्रेति । काशकुशावलम्बनादलङ्काराभाससंभावनायामलङ्कारनैयत्यपक्षनिर्वाह इत्यलं[5] क्षुल्लकाशया । कविसंरम्भगोचराणामलङ्काराणां न कस्यचिदुपलम्भः । तथापि न काव्यत्वभङ्गः । विशेषोक्तिविभावनयोः स्वस्वविरुद्धार्थमुखेन कथञ्चिदुत्थापनेऽपि न स्पष्टत्वं, कण्ठोक्त्या निषेध्ययोः कार्यकारणयोर्भावान्तरमुखेनाभावाभिधानात् । अथ च साधकबाधकप्रमाणाभावाद् द्वयोः सन्देहरूपः सङ्कर एव । तत्राप्यस्फुटत्वानुवृत्तिः । ननु सौन्दर्यमलङ्कार इति काव्यशरीरवर्तिनी चारुता काचिदत्र परिस्फुरति यत्र भावसाधनता । अलङ्क्रियतेऽनेनेति करणसाधनताकोटिक्रोडीकारेऽपि यन्निबन्धना काव्यस्य चारुता स एव शृङ्गारो रसः स्वैरमूरीक्रियताम् अलङ्कारत्वेन । प्रख्यायते हि रसभावादिर्नामालङ्कारः इत्याशङ्क्याह—रसस्येति । रसस्य प्राधान्याप्राधान्यलक्षणमवस्थायुगलमस्ति आत्मन इव परजीवत्वाकारम् । तत्र रसभावाद्यपेक्षया यदप्राधान्यं तद् गण्यतामलङ्कारत्वेन । यथा—

"अयं स रशनोत्कर्षी पीनस्तनविमर्दनः"

इत्यादौ । तत्र करुणस्य प्राधान्यादप्राधान्याच्च शृङ्गारस्यालङ्कारता । यथा वा ममैव—

१., २. 'त्र स्फु' क. पाठः. ३. 'व' ख. पाठः. ४. 'दायल' ख, ग. पाठः. ५. 'यं क्षुल्लतया',

तद्भेदान् क्रमेणाह—

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः[1]॥**

सम्प्रदायप्रकाशिनी

विशेषलक्षणस्य प्राप्तोऽवसर इत्याह — **तद्भेदानिति** ।

**इदमुत्तमामिति** । वाच्यादतिशयिनि व्यङ्ग्ये उत्तमं[2], स ध्वनि-

साहित्यचूडामणिः

किं ते गण्डे कितव! कुटिलाताम्रमालम्बमेतत्

किं तन्मुग्धे! परिमृशतु ते पाणिरा ज्ञातमाः किम् ।

प्रष्टव्योऽयं प्रणयकलहेष्वस्त्रमर्धं सुधांशो-

रित्यालापो रहसि शिवयोः पेशलस्तायतां वः ॥

इत्यत्र पार्वतीपरमेश्वरविषयस्य कविवर्तिनो भावस्य वाक्यार्थतया प्राधान्याद्-प्राधान्येन शृङ्गारस्यालङ्कारता । प्राधान्यपक्षे तु कटाक्ष्यमाणे नालङ्कारता प्रत्युत तस्यालङ्कार्यत्वम् । यदाह —

"तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।

ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।

काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥"

इति । प्रकृते शृङ्गारस्य प्राधान्यमविप्रतिपन्नम्, अन्यस्य भावादेः प्राधान्यो-चितस्याभावात् ॥

एवं सामान्येन काव्यलक्षणमुक्त्वा विशेषतः शिक्षयितुमाह — **तद्भे-दानिति** । क्रमेण उत्तमादिपरिपाट्या ।

**इदमिति** । काव्ये हि —

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।

वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥"

इति ध्वनिदृशा वाच्यो व्यङ्ग्य इत्यर्थद्वयमन्योन्यव्यतिषक्तमुपलभ्यते । कश्चिदखण्ड एवार्थो विवेकिभिर्विभागबुद्ध्या व्यवस्थाप्यत इति यावत् । **अतिशयिनीति** । वाच्यातिक्रमणसमर्थे व्यङ्ग्ये[3] काव्यं तदुत्तममिति ध्वनिरिति

१. 'तम्' इति मूलकोशपाठः  २. 'मं ध्व' ख. पाठः.  ३. 'रपि' ग. पाठः.

इदमिति काव्यम्। बुधैर्वैयाकरणैः प्रधानभूतस्फो-

सम्प्रदायप्रकाशिनी

रित्युक्तः। ध्वन्याचार्यैरिति शेषः। यदैवेत्थमुत्तमत्वं तदैव ध्वनिव्यवहार इति यावत्।

पूर्वकारिकायां तदिति निर्दिष्टस्यापीह बुद्धिसन्निधानादिदमिति परामर्श इत्यभिप्रेत्याह — इदमिति काव्यमिति। बुधैर्वैया-

साहित्यचूडामणिः

च व्यपदिश्यते। व्यङ्ग्यकर्तृकातिक्रमणकर्मीभावो हि ध्वनौ वाच्यस्य महानुपयोगः। यदाह —

"वाच्यानां वाचकानां च यदौचित्येन योजनम्।
रसादिविषयेणैतत् कर्म मुख्यं महाकवेः॥"

इति। अतिशयश्चायं व्यङ्ग्यस्य प्राधान्यं न तु पर्युदासो वाच्यस्य। नहि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति। वाच्याविनाभावेन तस्य प्रकाशनात् घटप्रदीपन्यायस्तयोः। यथा प्रदीपद्वारेण घटप्रतीतौ न तत्प्रकाशः प्रणश्यति, तद्वद्व्यङ्ग्यप्रतीतौ वाच्यस्फुरणस्यावर्जनीयत्वम्। क्रमस्तु लाघवात् क्वचिन्न लक्ष्यते क्वचिच्च लक्ष्यत इति वक्ष्यते। उपायकक्ष्यायां तु,

"यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुनः॥"

इति ध्वनिदृशा वाच्यव्यङ्ग्ययोः पौर्वापर्यनियमः। नन्वेवं युगपदर्थद्वययोगिता वाक्यस्य प्रसज्येत। तथा चास्य वाक्यतैव विघटेत ऐकार्थ्यलक्षणत्वात् तस्येति चेत्। न। गुणप्रधानभावेन तयोरवस्थानात्। ध्वनौ वाच्यं गुणः, व्यङ्ग्यं प्रधानम्, इतरत्र विपर्ययः।

इदमितीति। 'तददोषौ शब्दार्थावि'त्यत्र तद्वृत्तेन परामर्शः, अत्र त्विदंवृत्तेनेति न प्रक्रमभङ्गदोषशङ्का, काव्यगोचरत्वात् तस्य। इत्थं 'तददोषौ शब्दार्थावि'त्यत्रोद्देश्यविधेयभावव्यत्यासेऽपि न दोषशङ्का। विद्वत्सामान्यवाचिनो बुधशब्दस्य ध्वनिवादप्रणेतृलक्षणे पर्यवसानमिति तदाह — वैयाकरणै-

४. 'क्तम्' क. ख. ग. घ. पाठः.

टरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः।

सम्प्रदायप्रकाशिनी

करणैरिति सर्वाभ्युपगतं प्रामाण्यमुद्घाटितम्। प्रथमे विद्वांसस्ते, व्याकरणमूलत्वात् सर्वविद्यानाम्। प्रधानभूतेति। अर्थप्रतीतौ प्रधानभूतं स्फुटत्यस्मादर्थ इति निरुक्त्यार्थस्फुटीकरणात् स्फोटाख्यं पदात्मकं[1] यदस्ति व्यङ्ग्यं तद्व्यञ्जनक्षमस्याक्षरात्मनः शब्दस्य ध्वनिरिति

साहित्यचूडामणिः

रिति। प्रथमे हि विद्वांसो वैयाकरणाः व्याकरणमूलत्वात् सर्वविद्यानामिति। प्रधानेति। वैयाकरणा हि गौरित्यादिप्रयोगे गकारादीनामेकैकशो वाचकत्वे द्वितीयाद्यानर्थक्यापातात् समुदायस्य वाचकत्वे समुदायिनां क्रमवत्तयाकर्ण्यमानत्वात्,

"क्रमवर्तिषु वर्णेषु सङ्घातादि न[2] युज्यते"

इति क्षणिकत्वस्य तेषामध्यक्षणीयत्वाद्, अभिमानमात्रसारत्वाच्च समुदायसंविदः,

"बुद्धौ तु सम्भवस्तस्य तदन्यत्वे प्रतिक्षणम्"

इति एकानुसन्धानक्रोडीकृतानां वर्णानां वाचकत्वे 'सरो रसो' 'हरो रह' इत्यादौ एकार्थप्रतीत्यापाताद्

"धीरन्त्यशब्दविषया वृत्तशब्दाहितस्मृतिः"

इत्यन्त्यबुद्धिनिर्ग्राह्यः स्फोटो नाम वाचकः, 'तस्माद् ध्वनिः शब्द' इत्याचार्यमहाभाष्यकारमर्यादया काव्ये व्यङ्ग्यव्यञ्जकानां शब्दानां ध्वनिशब्दवाच्यत्वमित्यातिष्ठन्ते। व्यञ्जकेभ्यो ध्वनिभ्यः स्फोटलक्षणव्यङ्ग्यस्य प्राधान्यमर्थप्रतीत्यवश्यम्भावात्। स्फुटत्यस्मादर्थ इति स्फोटः। यतो व्यञ्जकानां वर्णानां ध्वनिव्यवहारः, तत एव हेतोस्तन्मतानुसारिभिराचार्यानन्दवर्धनप्रभृतिभिरपि वाच्यार्थन्यक्कारसमर्थं यद् व्यङ्ग्यं वस्तु तद्व्यञ्जनविदग्धस्य शब्दार्थयुगलस्य ध्वनिरित्येव व्यवहारः कृतः। केवलं शब्दशरीरनिर्व्यूढा ध्वनिशिक्षा शब्दार्थयुगलमेलकलक्षणे काव्येऽपि योजितेति नात्यन्तं विशेषः। प्रादीनामुपसर्गाणां निपातानां च चादीनां वाचकत्वावधीरणेन व्यञ्जकत्वाङ्गीकारोऽपि तदनुरोधेनेति वैयाकरणोपज्ञमेतत्। अतः स्थित-

१. 'द्रात्मकं' ग. पाठः. २. 'भिधान' ग. पाठः.

ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य । यथा —

सम्प्रदायप्रकाशिनी

व्यवहारः कृतः । प्रत्येकसमुदायाभ्यां वर्णैरर्थप्रतीत्यनुपपत्त्या हि स्फोटं कल्पयन्ति ते । न्यग्भावितेति । न्यग्भावितवाच्यः उपसर्जनीकृतवाच्यो यो व्यङ्ग्योऽर्थस्तद्व्यञ्जनक्षमस्य शब्दस्यार्थस्य च । अतो नायं स्वकपोलकल्पितो ध्वनिव्यवहार इति भावः ।

साहित्यचूडामणिः

मेतद् वाच्यातिलङ्घनप्रवीणे व्यङ्ग्ये काव्यं तदुत्तमं ध्वनिरिति च व्यपदिश्यत इति । तदेतद् व्यक्तिविवेकव्याकृतान् दोषानुद्धर्तुम् ।

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥"

इति ध्वनिकारिकां प्रतिसंस्कृत्योक्तं यदुत । तत्र केचिदाग्रहोद्गृहीताः एके विद्यमानाः इतरे सन्तोऽपि न प्रमेयभागोपक्षीणा यावद्ग्रन्थप्रतीकखण्डनमात्रव्यापृता इति दोषाणां त्रैविध्यम् । तत्र विद्यमानानां परिहारः, अन्येषामुपेक्षा । यस्मादर्थस्य विशिष्टत्वदूषणमाग्रहप्रयुक्तं, ध्वनिस्कन्धाद् गुणीभूतव्यङ्ग्यलक्षणस्य काव्यस्कन्धस्यानपह्नवनीयत्वात् । एतदुक्तं भवति — वाच्यव्यङ्ग्ययोरुपायोपेयभावः अचारुचारुत्वविभागः उपकारकोपकार्यभावश्चेति त्रैविध्यम् । तत्रोपेयस्य चारोरुपकार्यस्य च प्राधान्यम् । अप्राधान्यं पुनरुपायस्याचारोरुपकारकस्य च इति स्थितावादिमयोः प्रतिक्षेपशङ्कायामन्तिमस्योपकार्यत्वस्य स्वविश्रान्तिलक्षणस्य न काचित् प्रतिक्षेपार्हता । इतरथा गुणीभूतव्यङ्ग्ये व्यङ्ग्योऽर्थो वाच्यो (वा यतःपायभूत)श्चारुरपि स्वविश्रान्तिशाली प्रसज्येत प्रत्युत तस्य वाच्योपस्काराय प्रवृत्तत्वात् । अत एवोक्तं ध्वनिवृत्तौ 'समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वादि'ति । ततश्च समासोक्त्यादौ प्रत्यावृत्य स्वविश्रान्तत्वेन वाच्यस्य व्यङ्ग्यार्थोपकार्यत्वमस्तीति व्यभिचारवदप्राधान्यमिति विशेषणोपपत्तिः । एवम्

१. 'स्या स्फो' क घ. पाठः २. 'वीय' ग. पाठः.

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।

सम्प्रदायप्रकाशिनी

निश्शेषेत्यादि । दूरमत्यन्तम् । अज्ञातपीडेत्यत्र पीडाशब्दस्यागमशब्देन सह समस्तस्यापि न बान्धवशब्दसम्बन्धे शक्तिशैथिल्यं, सम्बन्धित्वेन नित्यसापेक्षत्वात् । यदाह—

साहित्यचूडामणिः

"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेः स्मृतः ॥"

इत्यत्र दीपकादेरुपमादिं प्रत्यतत्परत्वसिद्धिः, यतस्तत्रापि दीपकादेरुपायत्वाचारुत्वयोरपि स्वविश्रान्तिलक्षणमुपकार्यत्वमनुभूयते, प्रतीयमानोपमया दीपकस्योपक्रियमाणत्वात् । तत एव दीपकव्यपदेशश्च इत्थं च यदुक्तमभिधयाभिधायकवदभिधयापि भाव्यं गृहीतयेति, तदप्ययुक्तं चिरन्तनरुद्रटादिभिः शब्दार्थधर्मतयालङ्काराणामङ्गीकारात्, न शब्दव्यापारधर्मतया अभिधा ह्यर्थप्रतीत्युन्नेयं शब्दोच्चारणम् । न च तस्य किञ्चिचारुत्वम्, उच्चार्यमाणस्य शब्दस्य प्रतिपाद्यस्य चार्थस्य चारुत्वनिश्चयात् । शास्त्रेतिहासादिवैलक्षण्यं च व्यापार्येण प्रयोज्यते न व्यापारमात्रेण इति ध्वनिकारस्याभिसन्धानादिति । 'सूरिभिः कथित' इति सूर्युपादानखण्डनमप्याग्रहनिर्व्यूढं सामान्यविवक्षायां दोषस्य शङ्क्यमानत्वाद् विशेषविवक्षायां तु प्रत्युत वैयाकरणोपक्रमत्वप्रख्यापनाद् गुणलाभात् । ततः पुंस्त्वदूषणादयो ग्रन्थखण्डनमात्रव्यापृताः । व्यञ्जनव्यापारः शब्दस्यार्थस्य वा नापह्नोतुं पार्यते, अनुमानस्यापि व्यञ्जनविशेषतयाङ्गीकारादित्यलं ग्रन्थगौरवेण ।

निश्शेषेति । एषा हि वल्लभानयनाय दूतीं प्रेषितवत्याः 'स्त्रियः कामितकामिन्यः' इति नीत्या तेनैव तामुपभुक्तामवगच्छन्त्याः कस्याश्चिदुपालम्भोक्तिः । अधमस्य नायिकातद्दूतीविभागानभिज्ञस्य । तदन्तिकं वल्लभस्य सकाशम् ।

मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येन व्यज्यते ॥ ४॥

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।**

अतादृशि वाच्यादनतिशायिनि । यथा —

---

सम्प्रदायप्रकाशिनी

"सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः प्रवर्तते ।
स्वार्थवत् सा[1] व्यपेक्षा स्ववृत्तावपि न हीयते ॥"

इति । अत्र वापीस्नानविधिरूपे वाच्ये तन्निषेधरूपो व्यङ्ग्यः, तदन्तिकगमननिषेधरूपे च वाच्ये गमनविधिरूपो व्यङ्ग्यश्चात्यन्तविरोधाद् भेदप्रसिद्ध्ये दर्शितः ॥ ४ ॥

**अतादृशीति** । व्यङ्ग्ये त्वतादृशि मध्यमं सद्[2] गुणीभूतव्यङ्ग्यं, कथितमित्यनुषज्यते ।

साहित्यचूडामणिः

**प्राधान्येनेति** । अयमेव हि वाच्याद् व्यङ्ग्यस्यातिशयः, यद् वापीं स्नातुमितो गतासीति विधौ वाच्ये न गतासीति निषेधो व्यङ्ग्यः यच्च न पुनस्तस्याधमस्यान्तिकमिति निषेधे वाच्ये तदन्तिकमेव रन्तुं गतासीति विधिर्व्यङ्ग्य इति । विधिनिषेधौ विरुद्धाविति न कस्यापि विमतिः ॥ ४ ॥

**अतादृशीति** । तादृक्त्वम् उत्तमकाव्यलक्षणयोगित्वम् । तद्व्यतिरेको वाच्यादनतिशयितत्वमित्याह — **वाच्यादिति** । मध्यमकाव्यं गुणीभूतव्यङ्ग्यमिति च पर्यायः । व्यङ्ग्यस्य स्वाभाविकं वपुः प्राधान्यमप्राधान्यं पुनरौपाधिकमिति च्विप्रत्ययः ॥

---

१. 'क्षास्य त्वृ' क ख. घ. पाठः. २. 'यत् तद्' क. घ. पाठः.

ग्रामतरुणं तरुण्या नववञ्जुल[1]मञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥

अत्र वञ्जु[2]ललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं गुणीभवति, तदपेक्षया वाच्यस्यैव चमत्कारकारित्वात् ।

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यमवरं स्मृतम् ॥ ५ ॥**

सम्प्रदायप्रकाशिनी

ग्रामतरुणमिति । ग्रामग्रहणेन प्रकाशपरिचयाभावो द्योत्यते । मुहुः पश्यन्त्या इति दर्शनावृत्त्या तत्राभिनिवेशः । नितरां मालिन्ये मुहुर्दर्शनं हेतुः । प्रतिदर्शनं मालिन्यमुत्कृष्यत इति यावत् । पश्यन्त्या भवतीति च वर्तमानव्यपदेशेन दर्शनमलिनीभावयोरपरिसमाप्तिः । अत्र वञ्जुलमञ्जरीसनाथकरं पश्यन्त्या मुखमालिन्यं नितरामाविर्भवतीति वाच्यं चमत्काराय कल्पते । तदप्रामाणिकं मा भूदिति तदुपपादकत्वेन वञ्जुलतागृहे द[3]त्तसङ्केता न समागतेति व्यङ्ग्यं गुणीभवति ।

शब्दचित्रमिति ।

साहित्यचूडामणिः

ग्रामेति । ग्रामणीपुत्रानुरागिणीं वञ्जुलतागृहे दत्तसङ्केतां श्वश्रूपारतन्त्र्येण निर्गन्तुमसमर्थां तस्मिन् सङ्केतस्थानमुपगम्य शून्यं प्रतिनिवृत्ते तदभिज्ञा[4]पनाय वञ्जुलसम्बन्धिनीमेव पुष्पमञ्जरीमाददाने विषण्णहृदयां स्नुषामुद्दिश्य मिथः सख्योरुक्तिः ।

अत्रासौन्दर्यलक्षणं वक्ष्यमाणं गुणीभावोपाधिकमुपपादयति — तदपेक्षयेति । तस्य व्यङ्ग्यस्यापेक्षया प्रतिसम्बन्धिताबुद्ध्या वाच्यस्यैव चमत्कारकारित्वात्, न पुनर्व्यङ्ग्यस्य ।

शब्देति । अव्यङ्ग्यमधममित्युभयथा व्यपदेशः । शब्दाख्ये काव्यभागे चित्रं, न पुनरन्यत्र रसादौ । एवमर्थचित्रेऽपि । यदाह —

१, २. 'ञ्चु' इति मूलकोशपाठः ३. 'कृतस' क. घ. पाठः. ४. 'ज्ञाना' क. पाठः. ५. 'ह्य' ग. पाठः.

चित्रमिति गुणालङ्कारयुक्तम् । अव्यङ्ग्यमिति स्फुट-प्रतीयमानार्थरहितम् । अवरमधमम् । यथा —

स्वच्छन्दोच्चलदच्छकच्छकुहरच्छातेतराम्भश्छटा-
मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः ।

---

सम्प्रदायप्रकाशिनी

अव्यङ्ग्यमित्यत्र नञ ईषदर्थत्वं प्रकाशयितुमाह— स्फुटप्रतीयमानार्थरहितमिति ।

स्वच्छन्देत्यादि । स्वच्छन्दमुच्चलन्तीभिः अच्छाभिः कच्छकुहरेषु छातेतराभिरतुच्छाभिरम्भश्छटाभिर्मूर्छन्मोहा विगलदज्ञाना ये महर्षयस्तैर्हर्षेण विहितं स्नानरूपमाह्निकं यस्यां सा । उद्यन्त्युदारा दर्दुरा मण्डूका यासु तासु दरीषु दीर्घाणामदरिद्राणां फलकुसुमसमृद्धानां द्रुमाणां द्रोहः पातनाद्यपकारस्तदुद्रेकमयस्तदुत्कर्षप्रचुरः ऊर्मीणां मेदुरः पुष्कलो

साहित्यचूडामणिः

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थितेः ।
काव्ये उभे ततोऽन्यद् यत् तच्चित्रमभिधीयते ॥
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥"

इति । गुणालङ्कारयोगश्चित्रत्वम् ।

ननु सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स प्रकारः यत्र न प्रतीयमानार्थसंस्पर्शेन सौभाग्यमिति ध्वनिवृत्तियुक्त्या पर्यन्तकक्ष्यांप्रेक्षणे शृङ्गाराद्यन्यतमस्फुरत्तानैयत्यान्न तृतीयेऽपि काव्ये रसवासना त्रुट्यति । तत् कथमुक्तम् 'अव्यङ्ग्यमवरमि'त्याशङ्क्याह — स्फुटेति । कविसंरम्भगोचरेण प्रतीयमानार्थेन रहितं न तु सर्वथा व्यङ्ग्यवासनाशून्यम् । तस्मादव्यङ्ग्यत्वमल्पव्यङ्ग्यत्वे पर्यवस्यति, अनुदरा कन्येतिवत् । अवरमित्युक्ते शब्दशक्त्या मध्यममपि प्रतीयेत । तद्व्यपोहार्थमाह — अधममिति ।

स्वच्छन्देति । अत्रानुप्रासोऽलङ्कारस्तदनुगुणमोजश्च गुण इति ना

---

१. 'स्याम् । उ' ङ. ख. पाठः. २. 'द्रेकप्र' ख. ग. पाठः. ३. 'प्रत्यवेक्ष' ख पाठः.

भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमयोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥

विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयापि यम् ।

सम्प्रदायप्रकाशिनी

मदो यस्याः सा मन्दाकिनी वो मन्दतां भिन्द्यादिति योजना । अत्र छेकवृत्त्यनुप्रासप्राचुर्येऽपि स्फुटप्रतीयमानार्थाभावाद[३]धमत्वम् ।

विनिर्गतमिति । मानदमिति । संश्रितानां सम्मन्तारं द्विषां मानं खण्डयितारं हयग्रीवं यदृच्छया जिगमिषाभिसन्धिमन्तरेणापि लीलामात्रेण[४] मान्दरात् संचलितमुपश्रुत्य सिद्धचारणादिमुखात् प्रच्छन्नमाकर्ण्य ससम्भ्रमेणेन्द्रेण द्रुतं पातितार्गला संघटितकवाटा सत्यमरावती भिया निमीलिताक्षीव भवति । अत्र[५] स्थायिनो भा-

साहित्यचूडामणिः

तिदुर्ज्ञानम् । शान्तरसस्फुरत्ता च कदाचिदपि अपरिहार्या ।

विनिर्गतमिति । मानं द्यति ददातीति च मानदः । अत्रोत्प्रेक्षाल-ङ्कारस्तदनुगुणं च माधुर्यं गुणः । शृङ्गाराभासशालिनो वीररसस्य[६] सम्भावना नोत्कर्षप्राप्तिः[७] । न खलु जेतव्यया नगर्या सह प्रतिनेतुः शृङ्गारौचित्यम् । अनयोश्च कविविवक्षावैधुर्यादधमकाव्यकक्ष्यानिक्षेपः । सहृदयप्रतिपत्त्या तु काव्यकोटौ शक्यं क्रोडीकर्तुम् । ते हि नित्यं रसास्वादलालसास्तत्सम्भावना-मात्रमपि सम्भुञ्जते । एतच्चोदाहरणद्वयं शब्दार्थालङ्कारयोरेकैकपक्षाङ्गीकारापे-क्षया । मेलकपक्षस्तु गुणप्रधानभावप्रतिष्ठापनीयः षष्ठे वक्ष्यते इति सिद्धम् ॥

सा गोष्ठी यत्र कविः स कविर्यः सूक्तमाह तत् सूक्तम् ।
यत्र रसः स खलु रसो येन सचेताश्चमत्क्रियां लभते ॥

१. 'द्या' इति मूलकोशपाठः. २. 'द्या' ख. पाठ'. ३. 'दस्फुटत्वम्' क घ. पाठः. ४. 'णापि म' घ. पाठः ५. 'त्र व्यभिचारिणो भयस्था' क. घ. पाठः. ६. 'पि रस', ७. 'सम् । न' क. पाठः.

ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥

इति काव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूपविशेषनिर्णयो नाम

प्रथम उल्लासः ।

---

सम्प्रदायप्रकाशिनी

वस्य शब्देनोपादानाद् 'व्यभिचारिरसस्थायिभावानां शब्दवाच्यते'ति वक्ष्यमाणमनौचित्यमुत्प्रेक्षाकृतं चमत्कारमपकर्षति ॥

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-
पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्त्तिध्वनिप्रस्थानपरमाचार्य-
काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-
योगीश्वरश्रीमत्रिभुवनविद्याचक्रवर्त्तिवंशावतंसमहाकवि-
श्रीविद्याचक्रवर्त्तिकृतौ सम्प्रदायप्रकाशिन्यां
काव्यप्रकाशबृहट्टीकायां
प्रथम उल्लासः ।

---

साहित्यचूडामणिः

श्लाघ्यं गुणैरनुगुणैरनवद्यसौम्यमङ्गेषु भूषितमभूषितमप्युदारम् ।
औचित्यचारुचतुरं सरसं प्रकृत्या काव्यं कलत्रमिव मित्रयितुं यतध्वम् ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां
प्रथम उल्लासः ।

---

# अथ द्वितीय उल्लासः ।

क्रमेण शब्दार्थयोः स्वरूपमाह—

**स्याद् वाचको लाक्षणिकः शब्दोऽत्र[1] व्यञ्जकस्तथा**

**अत्रेति काव्ये । एषां[2] रूपं वक्ष्यते ।**

सम्प्रदायप्रकाशिनी.

## अथ द्वितीय उल्लासः ।

इत्थं प्रथमोल्लासेन सोपायप्रयोजनं काव्यस्वरूपमुक्त्वा धर्मिणोः शब्दार्थयोर्लक्षणमवसर[3]प्राप्तमित्याह वृत्तिकारः—क्रमेणेति । 'तददोषौ शब्दार्थावि'ति सूत्रे येन क्रमेणोद्देशस्तदतिक्रमे कारणाभावात् तेनेत्यर्थः ।

ननु शास्त्रादौ नास्ति व्यञ्जकाख्यः शब्दः, अतः कथमेवमुद्देशः कृत इत्यत आह — अत्रेति काव्य इति । अनन्यत्रभावः सप्त-

साहित्यचूडामणिः

## अथ द्वितीय उल्लासः ।

ओङ्कारकम्बुसम्भूता सा जयत्यमृताम्बुधौ ।
मुक्ताफलशलाकेव विशदा वाङ्मयी कला ॥

उल्लासान्तर[4]सङ्गतिमुल्लिङ्गयति— क्रमेणेति । 'तददोषावि'त्यत्र दोषहानादिसंपन्नौ शब्दार्थौ काव्यमित्यभाणि, तयोः स्वरूपमाहेति यावत् । धर्मिणि सिद्धे धर्मसिद्ध्यौचित्यात् ।

शब्दभेदानुद्दिशति — स्यादिति । त[5]थेति । यथा वाचकलाक्षणिकयोरङ्गीकारः, एवं व्यञ्जकस्यापि । यदि च स नाङ्गीक्रिय[6]ते, तद्वाचकलाक्षणिकावपि मा कदाचिदङ्गीकारिषातां, विशेषाभावात् ।

**अत्रेति काव्य** इति । व्यञ्जनविशिष्टः शब्दः शास्त्रे मा नाम भूत्, काव्ये तु स्वैरमूरीक्रियते । यदाह भोजः— 'तात्पर्यमेव वचसि ध्वनिरेव

१. 'त्रिधा' ख. पाठः. २ 'षां स्वरू' इति मूलकोशपाठः ३. 'रागतमि' ग. पाठः ४. 'श इ' क. ख. घ. पाठः. ५ 'रमु' क. ग. पाठः ६. 'त्रिधेति' क. पाठः. ७. 'येत त' ग. पाठः.

**वाच्यादयस्तदर्थाः स्युः**

**वाच्यलक्ष्यव्यङ्ग्याः ।**

**तात्पर्यार्थोऽपि केषुचित् ॥ १ ॥**

सम्प्रदायप्रकाशिनी

**म्या द्योत्यते । यथा काव्ये व्यञ्जकसद्भावस्तथोपपादयिष्यति । एषां रूपमिति । शब्दभेदानिर्देशो हि सहचरितार्थभेदजिज्ञासो- द्रिच्यत इति अर्थमपि भेदेन निर्दिश्य तदनन्तरं वक्ष्यत इत्यर्थः । वाचको लाक्षणिक इत्युद्देशेनैव सामान्यात्मकः स्वशब्दार्थांश उक्तः । विशेषस्तु वक्तव्यतयावशिष्ट इत्यभिप्रेत्याह — एषां रूपमिति । इतरथा स्वरूपमित्युद्दिष्टस्य प्रतिनिर्देशोऽपि तथैव स्यात् ।**

**वाचकादिशब्दत्रये सम्बन्धित्वेन ये वाच्यादयोऽर्थाः प्रतीयन्ते, तानयमादिशब्दः परामृशतीत्यभिप्रायेणाह— वाच्यलक्ष्यव्यङ्ग्या इति ।**

**ननु तात्पर्यार्थेन सह चत्वारोऽर्थभेदाः किं नोद्दिश्यन्त इत्यत आह — तात्पर्यार्थोऽपीति । केषुचिदिति, मतेष्विति शेषः ।**

साहित्यचूडामणिः

काव्ये' इति । तर्हि निर्विलम्बममी लक्ष्यन्तामित्यत्राह— **एषामिति** । वक्ष्यते, अत्रैवोल्लासे, अर्थवैचित्र्यद्वारा तेषां लक्षणीयत्वात् ।

क्रमादेषामर्थानुद्दिशति — **वाच्यादय** इति ।

आदिशब्दं व्याचष्टे — **वाच्येति** । अत्र उक्तिर्लक्षणा व्यञ्जनमिति क्रमेण वृत्तयो वक्ष्यन्ते ।

ननु तात्पर्यनिबन्धनोऽपि कश्चिदर्थः प्रवर्तत इत्याह — **तात्पर्येति** । तात्पर्यादागतोऽर्थस्तात्पर्यार्थः । **केषुचिदिति** लाक्षणिकमतेषु । तात्पर्यवृत्तिरस्मत्पक्षे कथञ्चिद् दूष्या कथञ्चिददूष्यापि ।

१. 'ते । अ' क. ख. घ. पाठः. २. 'कस्व' ख. ग. पाठः. ३. 'षां स्वरू' क. घ. पाठः. ४. 'यत्रोक्तिर्लक्षणामि' क. पाठः. ५. 'त्यत्राह' ग. पाठः.

आकाङ्क्षासन्निधियोग्यतावशाद् वक्ष्यमाणरूपाणा पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वा-

---

सम्प्रदायप्रकाशिनी

तत्र तावदभिहितान्वयवादिनां मतमुपन्यस्यति—आकाङ्क्षेत्यादिना। तात्पर्यार्थः समुल्लसति अबाधितत्वेन प्रकाशत इति। प्रतिज्ञातस्य कारणभेदात् पदार्थतो भेदं दर्शयति — आकाङ्क्षासन्निधियोग्यतावशादिति। सङ्केतग्रहणमात्राद्धि पदार्थः प्रतीयते। तात्पर्यार्थस्त्वाकाङ्क्षादिवशात्। आकाङ्क्षा प्रतिपत्तुर्जिज्ञासा। तामिमां शब्दार्थपर्यवसानोत्थापितां शब्दार्थधर्मत्वेनोपचरन्ति। यदुक्तम्—

"आकाङ्क्षा प्रतिपत्तुर्हि जिज्ञासानवसानतः।
सा हि शब्दार्थयोर्जाता तद्धर्म उपचर्यते॥"

इति। आकाङ्क्षितस्य योग्यस्य चानन्तर्यं सन्निधिः। स सम्भवे शब्दव्यपेक्षकः। असम्भवे तु बुद्धिव्यपेक्षकः। यदाह—

"यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः।
अर्थतो ह्यसमानानामानन्तर्यमकारणम्॥"

इति। योग्यता बाधप्रतीत्यभावः। सत्यपि कारणभेदे यदि प्रतीतौ यौगपद्यं तदैकशक्तिक्रोडीकारान्न भेदसिद्धिरिति शङ्कित्वा कालभेदं दर्शयितुमाह—वक्ष्यमाणरूपाणामिति। 'जात्यादिर्जातिरेव वे'ति रूपमेषां वक्ष्यते। एषां समन्वये पदैर्हि पदार्थाः पूर्वं प्रतीयन्ते।

साहित्यचूडामणिः

तत्र प्रख्यातशास्त्रद्वयनिबन्धनां विप्रतिपत्तिमाह — आकाङ्क्षेति। पदानामन्योन्यसव्यपेक्षत्वमाकाङ्क्षा। या मुख्यया वृत्त्या प्रतिपत्तॄणां प्रतिपित्सारूपा, पदानां पुनरौपचारिकी। आकाङ्क्षितस्य योग्यत्वे सति पदान्तरेण सहानन्तर्यं सन्निधिः। बाधानुत्पादेन सम्बन्धार्हत्वं योग्यता, यदभावादङ्गुलीकोटौ कुञ्जरघटा विलुठतीत्यादेरप्रामाण्यम्। आसां वशः सामर्थ्यम्। पदार्थानां जातिगुणादीनामभिधेयत्वलक्षणानां समन्वये व्यपेक्षादिभिरेकार्थपरतयो-

---

१. 'त' क. प्र. पाठः.

क्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम्। वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः॥ १॥

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते।**

---

सम्प्रदायप्रकाशिनी

अथ संसर्गावसरे हि तात्पर्यार्थावगमः। अथ स्वरूपभेदं दर्शयति—**विशेषवपुरिति**। अविशिष्टो हि पदार्थः, अयं तु संसृष्टतया विशेषवपुः। प्रतीतितोऽपि भेदं दर्शयति—**अपदार्थोऽपि वाक्यार्थ इति**। पदस्यायमर्थो न भवति, अपितु पदसमष्टिरूपस्य वाक्यस्येति। नचायमुल्लासो विपर्यासरूपः, अपितूपदर्शितैः कारणकालादिरूपैर्भेदैः[1] सम्यग्रूप एवेति समुपसर्गाशयः। अभिहितान्वयवादिनामिति बहुवचनेन प्रेक्षावद्बहुत्वमासूचितम्। अथ मतान्तरमुपक्षिपति—**वाच्य एवेत्यादि**। मतमित्यनुषज्यते। वाच्यः पदार्थः। अन्विताभिधानवादिन इत्येकवचनेन बह्वनुग्रहाभावो ध्वनितः। प्रपञ्चोऽस्य पञ्चमे भविष्यति॥ १॥

य एते वाच्यादयस्त्रयोऽर्थास्तेषां काव्योपयोगितालक्षणं विशेषं दर्शयितुमाह—**सर्वेषामिति**। प्रायशः न तु सर्वदा। व्यञ्ज-

साहित्यचूडामणिः

पात्तानां मिथोऽभिग्रथनमन्वय इत्युक्तत्वात्[2] संबन्धे सति, पदार्थविलक्षणतया तद्रूपो वाक्यार्थ इत्यङ्गीकारात्। विशेषः सरित्तीरफलसंसर्गादिर्वपुराकारो यस्य। अपदार्थोऽपीत्यपिशब्देन पक्षान्तरापेक्षया वैमत्यमुपक्षिप्यते। एवमभिहितान्वयं प्रस्तुत्यान्विताभिधानं प्रस्तौति—**वाच्य एवेति**। न पुनस्तद्व्यतिरिक्तो वाक्यार्थः। आहुरिति शेषः॥ १॥

प्रसङ्गात् सर्वाकारप्रसाध्यस्य व्यङ्ग्यस्य न क्वचिद् भङ्गशङ्केत्याह—**सर्वेषामिति**। प्रायश इति। तज्जातीयत्वेन व्यञ्जकत्वनैयत्यं न तु तत्सर्वव्यक्तिनिष्ठत्वेनापि, त्रिष्वपि व्यभिचारात्।

---

१. 'भेदैः' ख. ग. पाठः. २. 'तीत्यर्थोपलक्षणाय त' क. ख. पाठः.

तत्र वाच्यस्य यथा —

माए घरोवअरणं अज्ज खु णत्थित्ति साहिअं तुमए ।
ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥

अत्र स्वैरविहारार्थिनीति व्यज्यते ।

लक्ष्यस्य यथा —

---

सम्प्रदायप्रकाशिनी

कत्वमपीत्यपिशब्दाद् वाच्यादिरूपेणावस्थानमपि । इष्यते, ध्वन्याचार्यैरिति शेषः ।

**माए घरेति ।**

मातर्गृहोपकरणमद्य खलु नास्तीति कथितं त्वया ।
तद् भण किं करणीयमेवमेव न वासरस्तिष्ठति ॥

मातरित्यनुशयाभिव्यञ्जिकया सम्बोधनकाक्वा प्रवृत्तावक्षमत्वाभिनयो व्यज्यते । गृहोपकरणमित्यवश्यकर्तव्यत्वम् । अद्य खल्विति अद्यतनत्वाच्छङ्कानवकाशः । कथितं त्वया, ननु मया व्याज उत्पादितः । तद् भणेति स्वस्य कर्तव्याज्ञानाभिनयः । एवमेव न वासरस्तिष्ठतीति क्षणमात्रमपि विलम्बानर्हता ।

साहित्यचूडामणिः

**माए इति ।**

मातर्गृहोपकरणमद्य खलु नास्तीति शिष्टं त्वया ।
तस्माद् भण किं करणीयमेवमेव न वासरस्तिष्ठति ॥

इति । साहिअं साधितं वा । पुरुषविशेषाभिसारमभिलषन्त्या गणिकाया मातरमुद्दिश्योक्तिः । एवमेवेति प्रत्यक्षमुपलक्ष्यमाणः प्रकार उपपाद्यते ।

---

१. 'हु', २. 'स्वक' ख. पाठः. ३. 'व्यताज्ञा' क. घ. पाठः. ४. 'म्बनान' ग. पाठः. ५. 'कथितं स्व' ख. पाठः.

साहेन्ती सहि! सुहअं खणे खणे दूमिआसि मज्झ कए ।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम्[1] । तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् ।

व्यङ्ग्यस्य यथा —

सम्प्रदायप्रकाशिनी

साहेन्तीति[2] ।

साधयन्ती सखि! सुभगं क्षणे क्षणे दूनितासि मम कृते ।
सद्भावस्नेहकरणीयसदृशं तावद् विराचितं त्वया ॥

अत्र कैतवोपचारान्मुख्यार्थबाधे विपरीतलक्षणयैवमर्थो भवतीत्याह —अत्र मत्प्रियमित्यादि । त्वया तावदित्थं कृतमिति योऽयमाक्षेपः, स तस्याप्यपराधमाविष्करोति । तदिह व्यङ्ग्यमित्याह — तेन चेति ।

साहित्यचूडामणिः

साहेन्तीति[3] ।

साधयन्ती सखि! सुभगं क्षणे क्षणे दूनासि मम कृते ।
सद्भावस्नेहकरणीयसदृशं तावद् विरचितं त्वया ॥

इति । एषा विपरीतलक्षणयोक्तिः । साधनमुपायैरनुकूलनम् । सद्भावः सौशील्यं स्नेहो भावविशेषः, करणीयं कर्तुं योग्यं कर्म, एषां[4] सदृशमुचितं (कृत्वा ? कृतं त्वया) । अत्र वक्तृप्रतिपाद्ययोरुपकारापकारपरायणयोः सौजन्यदौर्जन्यातिशयप्रख्यापनाय वैपरीत्याल्लक्षणा । सापत्न्यलक्षणो लक्षणीयश्चार्थः प्रयोजनभूतं वल्लभविषयाधमस्वभावताप्रकाशनमर्थान्तरमभिव्यनक्ति । विरोधः सम्बन्धः । शत्रुत्वं सापत्न्यं, यो हि यस्यापकारी स तस्यारिरित्युक्तत्वात् । नन्वेवं 'निश्शेषच्युते'त्यादावभिधामूलेऽप्यतिप्रसङ्गः येन तत्रापि व्यङ्ग्येन मुख्योऽर्थो बाध्यते । बाधितत्वमतिशयितत्वमिति नार्थान्तरमिति चेत् । न । बाधातिशययोः स्व-

१. 'क्ष्यते । ते' क. पाठः. २, ३. 'ह' क. ख. पाठः. ४. 'ते' ख. पाठः.

उव णिच्चळणिप्फन्दा विसिणीपत्तम्मि[1] रेअइ[2] वळाआ ।
णिम्मळमरगअभाअणपडिट्ठिआ सङ्खसिप्पि व्व ॥

अत्र निष्पन्दत्वेनाश्वस्तत्वं[3], तेन च जनराहितत्वम्,

सम्प्रदायप्रकाशिनी

उव णिच्चळेति ।

पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनप्रतिष्ठिता शङ्खशुक्तिरिव ॥

निश्चलेति शरीरस्य निष्पन्देति च मानसस्य क्षोभस्याभावकथनम् । अतो निर्मलमरकतेति न वर्णमात्रसाम्यम्, अपितु अचेतनस्थिताचेतनवस्तुवत् स्तैमित्यं च विवक्षितम् ।

अत्र व्यङ्ग्यस्य व्यञ्जकतां प्रतीतिकक्ष्याक्रमेणोपदर्शयति[5]—अत्र निष्पन्देत्यादि । केनापि काञ्चित् प्रतीत्यपि योजनार्हतायां कयापि कञ्चिदित्यादियोजना नायिकारब्धस्य शृङ्गारस्य प्रकर्ष-

साहित्यचूडामणिः

भावभेदात् । यदेकस्य प्रमाणपराहतत्वम् अन्यस्य न्यक्कृतत्वं[6] चार्थ इति विवेकः । तदभेदेऽपि प्रतीतिबाधयोः पौर्वापर्यपर्यालोचनात् । तथाह[7]—

"क्वचिद् बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम् ।
पूर्वत्र लक्षणा तस्मादुत्तरत्राभिधैव हि ॥"

इति ।

उवेति ।

पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरतकभाजनप्रतिष्ठिता शङ्खशुक्तिरिव ॥

इति । शङ्खोत्कीर्णा शुक्तिरङ्गरागाद्याधारः । निश्चला निष्कम्पा । निष्पन्दत्वेनाश्वस्तत्वं व्यङ्ग्यम्, अनाश्वासे तदनुपपत्तेः । तेन जनराहित्यं व्यङ्ग्यम् ।

१. 'भि', २. 'ह' ख. पाठः. ३. 'त्वं व्यज्यते । ते' क. पाठः ४. 'रतकभा' क. घ. पाठः. ५. 'ण द', ६. 'त्वार्थे', ७. 'थ' ग. पाठः.

अतः सङ्केतस्थानमिति कयापि कञ्चित् प्रत्युच्यते । अथवा मिथ्या वदसि, न त्वमत्रागतोऽभूरिति व्यज्यते ॥ १ ॥

वाचकादीनां क्रमेण स्वरूपमाह—

**साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥ २ ॥**

---

सम्प्रदायप्रकाशिनी

प्रकाशनाय । सम्भोगाच्च विप्रलम्भः प्रकृष्यत इति तत्परत्वेनापि योजयति—अथवा मिथ्येत्यादि । इत्थं वाचकादयस्त्रयः शब्दास्त्र-यश्च वाच्यादयोऽर्थाः, त्रयाणामपि प्रतिस्वं व्यञ्जकत्वमित्युद्देशत्रयम् । तत्र शब्दार्थयोः स्वरूपमिहोल्लासे लक्षयति । अर्थस्य व्यञ्जकत्वं तु तृतीये ॥ १ ॥

अथ 'एषां रूपं वक्ष्यत' इति यत् प्रतिज्ञातं तस्यायमवसर इत्याह — वाचकादीनामिति ।

साक्षात् सङ्केतितमिति । अभिधत्त इति । अभिधानमिह लक्षणव्यञ्जनव्यतिरेकेण प्रतिपादनमात्रम् । इतरथा ह्यभिधया प्र-

साहित्यचूडामणिः

अत इति । अनेन व्यङ्ग्येन । सार्वविभक्तिकस्तसिः । सङ्केतोचितं स्थान-मिति व्यङ्ग्यम् । इतीति । एवं व्यङ्ग्यानुगुण्येन कयापि हालिकस्नुषा-दिकया । कञ्चिद् ग्रामतरुणप्रभृतिं प्रति । उच्यते कथ्यते । एवं व्यङ्ग्यपर-म्परानुधावनेऽपि न प्रहेलिकाप्रायत्वमित्युपर्युद्घाटयिष्यते । तृतीयं व्यङ्ग्यपर्वं प्रकारान्तरेण व्याचष्टे — अथवेति । बिसिनीषण्डे त्वामन्विष्यागतोऽहमिति मिथ्यावादिनं युवानं काचिदाहेति । अत्र प्रत्यक्षं प्रेक्ष्यमाणे बिसिनीषण्डे त्वं नागतोऽभूः बलाकाया आश्वासनिमित्तान्निष्पन्दत्वात् । अतस्त्वं मिथ्या वद-सीति ।

वाचकं लक्षयति — साक्षादिति । अभिदधातिरत्र शब्दवृत्तिमात्रे प्रतिपादनलक्षणे वर्तते । यदाह भोजः—"तेषु शब्दस्यार्थाभिधायिनी शक्तिर-भिधा । तया स्वरूप इवाभिधेये प्रवर्तमानः शब्दो वृत्तित्रयेण वर्तते । ताश्च मुख्या

---

१. 'कथना' ग. पाठः. २. 'त्वं तु' ख. ग. पाठः. ३. 'णा' क. ख. ग, घ. पाठः, ४. 'गा' क. पाठः.

इहागृहीतसङ्केतस्य शब्दादर्थविशेषप्रतिपत्तेरभावात् सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य

सम्प्रदायप्रकाशिनी

तिपादको वाचकः वाचकस्य व्यापारोऽभिधेत्यन्योन्याश्रयता स्यात् ।

ननु सङ्केत एव तावद् विमतिः, कथं सङ्केतितार्थसिद्धिः, कथं वा तन्निबन्धना वाचकतेत्यत आह—इहागृहीतेत्यादि। इह लोकव्यवहारे। अर्थविशेषप्रतिपत्तेरिति । अज्ञातसङ्केतस्याप्यर्थसामान्यप्रतिपत्तिरस्तीति तद् व्यावर्तयितुं विशेषग्रहणम् । अर्थविशेषो जातिगुणादिः। सङ्केतसहाय एवेत्येवकारेण न पुनरन्यथेति नियमः प्रत्याय्यते। अत्रायमाशयः—ये हि कृतकशब्दवादिनस्तेषामर्थेषु शब्दानां पारमेश्वरः सङ्केतोऽभिमतः। ये पुनर्नित्यशब्दवादिनस्तैरपि शब्दार्थयोर्नित्येऽपि सम्बन्धे सम्बन्धज्ञानं सङ्केतितत्वेनाभ्युपगन्तव्यं

साहित्यचूडामणिः

गौणी लक्षणेति तिस्रः[2]" इति। इतरथा पर्यायस्यापि लक्षणत्वापत्तिः। पर्यायोऽपि लक्षणमित्य[3]गतिका गतिः। तत्त्वे निघण्टुपाठादेवाशेषवैशेषिकार्थप्रतिपत्तिप्रसङ्गः।

इह लोके[4]।

"सर्वाकारपरिच्छेदशक्येऽर्थे वाचकेऽपि च ।
सर्वाकारार्थविज्ञानसमर्थो नियमः कृतः ॥"

इति वृद्धपुरुषप्रवर्तितः शब्दार्थयोर्नियमरूपो यः सङ्केतः तद्ग्रहणशून्यस्य, पुंस इति शेषः । शब्दाद् अर्थक्रियार्थमुच्चारितात् । विशेषेति । अर्थसामान्यस्य तावदस्तु प्रतीतिः, यस्यामर्थक्रिया नास्ति । सङ्केतसहाय इति अभिधाया वृत्त्यन्तराद् वैधर्म्यम्। यस्य शब्दस्य। यत्रार्थे। अव्यवधानेन निरन्तरार्थतया। तदुक्तं—

"व्यापारोऽर्थे ध्वनेः साक्षान्मुख्या वृत्तिरुदाहृता"

इति। व्यवधानेनापि सङ्केते लक्षणायामतिव्याप्तिः। अन्विताभिधाने व्यवधा-

१. 'ङ्केत' क. घ. पाठः. २. 'स्रः। इत' क. पाठः. ३. 'ति गतानुगतिकत्वे' ख. पाठः. ४. 'के। सर्वाकारा' क. ख. पाठः.

यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः ॥ २ ॥

सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव,

सम्प्रदायप्रकाशिनी

सम्बन्धज्ञानमन्तरेण शब्दार्थविशेषाप्रतिपत्तेरिति[1] । इतिः प्रकारे । उक्तेन प्रकारेण सङ्केतसिद्धौ सङ्केतितस्यार्थस्याव्यवधानेन प्रतिपादकः शब्दो वाचकः ॥ २ ॥

ननु कोऽयं सङ्केतितोऽर्थः, यस्य साक्षात्प्रतिपादकः शब्दो वाचकत्वेन निर्णीयतेत्यत आह—सङ्केतितश्चतुर्भेद इति । सङ्केतितः, अर्थ इत्यनुषज्यते । जात्यादिरित्यत्रादिशब्देन गुणक्रियायदृच्छाः संगृह्यन्ते । जात्यादिर्जातिरेव वेति मतद्वयम् । वाशब्दात् तद्वदपोहयोर्विकल्पना । वक्ष्यति हि—'तद्वानपोहो वा शब्दार्थः' इति ।

तत्र जात्यादिरिति मतमाक्षेपपुरस्कारेण प्रतिष्ठापयति —यद्यप्यर्थक्रियेत्यादिना । यद्यपीत्यर्धाङ्गीकारे । अर्थक्रिया आनयनबन्धनादिरूपा । प्रवृत्तिनिवृत्ती अर्थाक्षिप्तपुरुषसम्बन्धिन्यौ । गामानयेत्यादिव्यवहारे हि व्यक्तिरेव खल्वानयनबन्धनार्थक्रियार्हा पुरुषप्रवृत्तिनिवृत्तियोग्या दृश्यते, न तु जात्यादिः । अतः संकेतफलभूतप्रवृत्तिनिवृत्तिशालिनी व्यक्तिरेव सङ्केतितार्थो भवितुमर्हति, न तु नि-

साहित्यचूडामणिः

नेनापि सङ्केतस्य सुग्रहत्वात् । यदुक्तं—"गुणवृत्तिरमुख्यत्वेन स्थितं वाचकत्वमेवोच्यत" इति । स शब्दः तस्यार्थस्य वाचकः ॥ २ ॥

अथार्थक्रियौचित्याद् व्यक्तौ सङ्केतं पूर्वपक्षयति — यद्यपीति । विधिनिषेधविषयत्वात् प्रवृत्तावुपादाने निवृत्तौ हाने च समुचिता व्यक्तिरेव ।

१. 'तीतेरि' ग. पाठः. २ 'स्याव्य' क. घ पाठः. ३. 'यते इत्य' ग. पाठः.

तथाप्यानन्त्याद् व्यभिचाराच्च तत्र सङ्केतः कर्तुं न युज्यत इति, गौः शुक्लश्चलो डित्थ इत्यादीनां शब्दानां विषयविभागो

सम्प्रदायप्रकाशिनी

ष्फला जात्यादय इत्याक्षेपनिष्कर्षः। तदेतत् समाधत्ते— तथाप्यानन्त्यादित्यादि। उक्तनयेन व्यक्तिरेव सङ्केतफलभागिनी, अथाप्यनुगतरूपापुरस्कारेण भृङ्गग्राहिकया यदि व्यक्तिमात्रे सङ्केतः क्रियेत तदैकस्यां कृतः परत्र न प्रवर्तत इत्यानन्त्यदोष आपतेदित्यर्थः। ननु सङ्केतकृतामप्यानन्त्याद् भूतभविष्यद्व्यक्त्यवच्छेदकत्वमुपपद्यते, स्वसङ्केतितासु च व्यक्तिषु व्यवहारः सम्भवतीति कथमानन्त्यदोष इत्यत आह— व्यभिचाराच्चेति। अत्रैतदाकूतं— यदि स्वसङ्केतितासु सर्वत्र व्यवहारसम्भवादानन्त्यमदोषं मन्यसे, तदा गामानयेति स्वसङ्केतितगवानयनाय वृद्धेन नियुक्तो नियोज्यः स्वसङ्केतितामितरामानयेदिति व्यभिचारश्च प्रसजेदिति। इत्थमानन्त्यव्यभिचारदोषौ दुरुत्तरौ, अतो न तत्र सङ्केतः कर्तुं युज्यत इत्यर्थः। अथ दोषान्तरमाह—गौः शुक्ल इत्यादि। समनन्तरोपदर्शितेन दोषद्वयेन सङ्केतकरणानुपपत्तिर्दर्शिता। निरूप्यमाणेन तु दोषेण कृतेऽपि सङ्केते व्यवहारानुपपत्तिः। अस्यैव विभागस्य द्योतनाय सङ्केतः कर्तुं न युज्यत इति इतिकारः। विषयविभाग इति। अयं जातिवचनः अयं गुणवचन इत्येवमादिरूपः। न प्राप्नोति, प्राप्तिर्योग्यता, अयोग्यः स्यादित्यर्थः।

साहित्यचूडामणिः

अथ व्यक्तिव्यतिरेकात् तदुपाधिषु सङ्केत इति सिद्धान्तयति—तथापीति। आनन्त्यं व्यक्तिबाहुल्यम्। असङ्केतितार्थप्रतीतिर्व्यभिचारः। इतोऽपि प्रबलं दोषमाह— गौरिति। आदिपदेन यादृच्छिकस्वीकारः। गोशुक्लादिशब्दान व्यक्तिमात्रविश्रान्तौ वाच्यनिष्ठो विभागो न संगच्छते, पाणिहस्तादिवत् पर्यायतया परिशिष्यते। इतिर्हेतौ। चकारस्तृतीयदोषसमुच्चये। तस्या व्यक्तेर्य

१. 'नां वि' क. पाठः २. 'ङ्केतित' क. घ. पाठः. ३. 'यते त' ख. ग. पाठः. ४. 'न व' क. ख. घ. पाठः. ५. 'न्त्यं दो' ख. पाठः. ६. 'षरूपतेस्य', ७. 'आनन्त्यदो', ८. 'थवा व्य' ग. पाठः.

न प्राप्नोतीति च तदुपाधावेव सङ्केतः '
विधः वस्तुधर्मो वक्तृयदृच्छासन्निवेशिनश्च
द्विविधः सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः
णप्रदो विशेषाधानहेतुश्च । आद्यो जातिः

---

सम्प्रदायप्रकाशिनी

न पुनरवाप्तिः प्राप्तिः, क्रमाभावात् । गौः शुक्ल इत्यादि
वचनेषु यदि व्यक्तिमात्रं सङ्केतितार्थत्वेनाङ्गीक्रियेत
विभागो न प्रतीयेत, अपि तु व्यक्तिर्व्यक्तिरित्युक्
जात्यादावेव सङ्केतो न्याय्य इत्याह—तदुपाध...
सङ्केतः उपहितायां व्यक्तौ प्रवृत्तिनिवृत्ती ...
तमुपाधिं विभज्य दर्शयति—उपाधिश्चेति । वस्तु...
कतया विद्यमानो धर्मः । वक्तृयदृच्छेति । वस्तुप्रत्य...
स्वेच्छया परिकल्पितः । सिद्धोऽपीति । सिद्ध...
वस्तुधर्मे सिद्धः पदार्थस्य प्राणप्रदत्वेन विशेषाधानहेतुत्वेन ... ।
आद्य इति । प्राणप्रद इति य उपाधिः स जातिरित्यर्थः । ... इव
प्राणप्रदः, यं विना वस्तुनः स्वरूपमेव न सिध्येदित्यर्थः । उक्तार्थे प्रा-
माणिकसंवादं दर्शयति—उक्तं हीति । वाक्यपदीये वाक्यानि पदानि

साहित्यचूडामणिः

उपाधिर्धर्मः तत्रैव सङ्केतः । एनं विभजते — उपाधिश्चेति । वस्तुभूतस्व-
देहवाचकत्वप्रयुक्तो धर्मः, वक्त्रा व्यवहर्त्रा निर्निबन्धनतया सन्निवेशितश्च । आ-
दिममुपाधिं भूयो विभजते—वस्त्विति । सिद्धो निष्पन्नः । साध्यो निष्पाद्यः ।
पुनः सिद्धं द्विविधमुपदर्शयति—सिद्धोऽपीति । पदार्थस्य अर्थाद् व्यक्तिरूपस्य
प्राणप्रदः स्वरूपलाभहेतुः । विशेषस्य वैलक्षण्यस्य समर्पणे हेतुश्च । आद्य इति ।
प्राणप्रद उपाधिर्जातिश्च मतभेदव्यतिरेकेण नार्थान्तरम् । अत्र अभियुक्तोक्ति
संवादयति—उक्तं हीति । स्वरूपेण व्यक्त्यात्मना स्वलक्षणेन । न गौः गोत्व-

---

१. 'पाहितार्थायां' ख. ग. पाठः. २. 'वः । उपा' क. पाठः. ३ 'षु वि' ख. ग. पाठः. ४ 'स्तुस्व' ग. पाठः. ५. 'स्वदेहवाकप्र' ख. ग. पाठः.

[५]दीये— "गौः स्वरूपेण न गौर्नाप्यगौः गोत्वाभिसम्बन्धात् तु गौः" इति। द्वितीयो गुणः। शुक्लादिना हि

सम्प्रदायप्रकाशिनी

चाधिकृत्य कृते ग्रन्थे। भर्तृहरिणेति शेषः। स्वरूपेण जात्यभिव्यञ्जकसास्नादिविशेषानुल्लिखितेन पिण्डमात्रेणोपलक्ष्यमाणः न गौः गौरिति व्यवहर्तुं न शक्यते। नाप्यगौः न चागौरश्वादिरित्यपि। अतोऽन्वयव्यतिरेकाभ्यां जातिरेव स्वरूपसिद्धिहेतुरित्याह—गोत्वाभि[१]सम्बन्धात् त्विति। द्वितीय इति। द्वितीयो विशेषाधानहेतुरुपाधिः। तस्य विशेषाधा[२]यितां विविच्य दर्शयति—शुक्लादिना हीति। जात्या सिद्धस्वरूपं हि वस्तु शुक्लादयो वि[३]शिंषन्ति। तृतीयमुपाधिं विवेचयति—

साहित्यचूडामणिः

जात्यनाक्रान्तत्वात्। नाप्यगौः महिषत्वादिजात्यन्तरानाश्लिष्टत्वात्। (तद्?)गोत्वाभिसम्बन्धादेव गौः। तुरवधारणे। सिद्धभेदे विशेषाधायक उपाधिः द्वितीयो यः स गुणः। तस्य गुणत्वमुपपादयति—शुक्लादिनेत्यादि। लब्धा सत्ता सद्भावो येन, न तु खपुष्पादिवदसद् विशेष्यते। साध्य उपाधिः क्रियारूपः। क्रिया च कीदृशीत्युक्तं— पूर्वेति। एतेन जात्यादिलक्षणमुन्मीलितम्। यदाहुः—

"भिन्नेष्वभिन्नधीशब्दौ धवलादिषु यद्बलात्।
वर्तेते जातिरेषा स्यान्मालासूत्रवदन्विता॥
द्रव्याश्रयस्ततो भिन्नस्तत्प्रतीतिरपाश्रयः।
विपरावृत्तिधर्मा च निर्गुणो गुण इष्यते॥
कर्त्रादिकारकग्राम[४]निर्वर्त्त्योऽसत्त्वधर्म[५]तः।
पदार्थो व्याप्यकर्तृस्थः क्रियाविद्भिः क्रियेष्यते॥
नामरूपेण संवित्तेः कश्चित् संज्ञी निगद्यते।
नामेति तद्यथा चैत्रः संज्ञाशब्दश्च तद्ध्वनिः॥
प्रतीतिभेदमाश्रित्य द्रव्यशब्दात् पृथक्कृतः।"

१. 'दि' ख. ग पाठः. २. 'पर्कं हि' ग. पाठः. ३. 'विशिष्टं कुर्वन्ति' ख. ग. पाठः. ४. 'दौ स' क. ख. घ. पाठः. ५. 'सम्मतः' क. ख. पाठः.

लब्धसत्ताकं वस्तु विशेष्यते । साध्यः पूर्वापरीभूतावयवक्रि-यारूपः । डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन सन्निवेश्यत इति

सम्प्रदायप्रकाशिनी

साध्यः पूर्वेति । साध्यः क्रियारूपः । ननु पचतीत्यादौ[1] स्थालीसम्मार्जनाद्यवस्रावणान्ता बहवः परिस्पन्दा दृश्यन्ते । का तत्र क्रिया नामेत्यत आह— पूर्वापरीभूतावयवेति । नहि पचतीत्यादौ क्लेदादिमात्रं क्रिया, अपितु पूर्वापरीभूताः सर्व एवावयवाः । यदुक्तं—

"कालानुपाति यद्रूपं धात्वर्थस्य क्रियेति तद्"

इति । चतुर्थं विवेचयति — डित्थादिशब्दानामित्यादि । अन्ते भवा अन्त्या, तया निर्ग्रहयम् । उत्तरोत्तरवर्णोच्चारणकाले हि पूर्वपूर्वविनाशे डित्थादिशब्दानां स्वरूपमन्तेभवया तत्तद्वर्णसंस्कारसध्रीचीनया बुद्ध्यैव निर्गृह्यते । ननु यदि तदापि वर्णेषु क्रमः, तर्हि स[2] एव समुदायानुपपत्तिलक्षणो दोष इत्यत आह—संहृतक्रममिति । उच्चारणकालप्रतीतस्यानुसन्धानसमयेऽनुपयोगाद् विरोधाच्च क्रमस्या(न्ता(न्त्य)बु[3]द्धावुपसंहारः । स्वरूपं वर्णसमुदायात्मकम् । यदृच्छया प्रवृत्ति-

साहित्यचूडामणिः

इति । द्रव्यशब्दस्य सर्वसाधारण्यान्न पृथग्लक्षणम् । यच्चाहुः —

"यद्यद् विशेष्यते किञ्चित् तत्तद् द्रव्यमिहेष्यते ।
जात्यादेरप्यतस्तादृग्द्रव्यत्वमुपकल्प्यते ॥
वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥"

इति । एवं वस्तुधर्मं विचार्य यादृच्छिकं व्याचष्टे—डित्थादीति । अन्त्यस्य सर्वपश्चिमस्य ध्वनेर्या बुद्धिस्तया साकल्येन स्वीकार्यम् । स्वरूपं स्फोटानुप्राणनस्वभावः । उक्तं च —

"ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ।
नादैराहितबीजायामन्त्येन ध्वनिना सह ॥

१. 'द्वौ स' क. ख. घ. पाठः. २ 'त' क. घ., 'तदेव' ग. पाठः. ३. 'बुं' क. ख. घ. पाठः.

गुणक्रियायदृच्छानां वस्तुत एकरूपाणामपि आश्रयभेदाद् भेद इव लक्ष्यते, यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्ब-

सम्प्रदायप्रकाशिनी

ति — **गुणक्रियायदृच्छेत्यादि** । यदृच्छेति यदृच्छाशब्दानिर्देशः भीमसेनो भीम इत्यादाविव प्रतीतलक्षणया । एकरूपाणामिति । शुक्लतरः शुक्लतमः गच्छतितरां गच्छतितमामित्यादिना[1] रूपभेदेन वस्तुतो रहितानामपि[2] । आश्रयभेदात् शङ्ख[3]शकुन्तादेराश्रयस्य वैमल्यशीघ्रत्वादितारतम्यविशेषात् । अत एव भेदाभासतां प्रकाशयितुं भेद इवेत्युपन्यासः । यद्यपि गुणक्रियादौ शुक्लतरः शुक्लतमः गच्छतितरां गच्छतितमामित्यादिकस्य रूपभेदस्यानुभवासिद्धत्वाद् न गुणत्वक्रियात्वादिर्जातिः कल्पयितुं शक्यते, अनुगतरूपाभावे तदसम्भवात् । यत्र हि जातिः सम्भविनी, न तत्र तारतम्यव्यवहारः । नहि गोतरो गोतम इति व्यवहारोऽस्ति । इत्थं गुणत्वादिजातौ येयमनुपपत्तिः सोऽयमनुपपत्त्याभास एव, शुक्लतरः शुक्लतम इत्यादेर्भेदस्याश्रयवैमल्यतारतम्योपाधिकत्वात् । अतो हिमपयःशङ्खादिषु शुक्लिम्न एकरूपत्वान्नाशक्यकल्पना जातिरित्याशयः । एकरूपस्याप्युपाधितो भेदं दृष्टान्तेन द्रढयति — **यथैकस्येत्यादि** । खड्गादीनि

साहित्यचूडामणिः

इति चेत् । न । भूषणादिमर्यादया सम्यक्त्वादिना सममनुभवत्वादिवदिति ब्रूमः । नन्वेतद् घट्टकुट्यां प्रभातं, येन व्यक्तौ सङ्केतं गृह्णतामानन्त्यादयो ये दोषाः ते सर्वानुस्यूतां जातिमेकामवधूय गुणक्रियायदृच्छात्रयमनुबध्नन्ति । घटस्य शुक्लः पटस्य शुक्लः इति ओदनस्य पाको गुलस्य पाक इति डित्थस्य यदृच्छा डवित्थस्य यदृच्छेत्यानन्त्यव्यभिचारयोरपरिहार्यत्वादिति चेत् तत्राह — **गुणेति** । वस्तुतत्त्ववृत्त्या आश्रयभेदात् गुणाद्याधाराणां वैलक्षण्यात् । **भेद इवेति** । न तु भेद एव लक्ष्यते । प्रत्येकमैकरूप्यमेव गुणक्रियायदृच्छानां स्वभाव इति यावत् । अत्र दृष्टान्तः — **यथेति** ।

१. 'र्ना न व' ग. पाठः. २. 'मिति । आ' क. घ. पाठः. ३. 'ङ्खकुन्दादे' ग. पाठः.

नभेदात् । हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्ला[1]दिषु यद्वशेन शुक्लः शुक्लः इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिसन्ततिस्तत् शुक्लत्वादि सामान्यम् । गुडतण्डुलादिपा[2]कादिष्वेवमेव पाकत्वादि । बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु

सम्प्रदायप्रकाशिनी

मुखस्य प्रतिबिम्[3]बनालम्बनानि । खड्गालम्बनं श्यामतया, मुकुरालम्बनमुज्ज्वलतया, तैलालम्बनं तु स्निग्धतया मुखमाभाति । न त्वेतावता मुखे रूपवैविध्यमिति भावः । इत्थं गुणक्रि[4]यादिषु तारतम्योभावसिद्धौ न्यायतो जातिमवस्थापयति — **हिमपयश्शङ्खादीत्यादिना । परमार्थत इति** । नहि य एव हिमाश्रयः शुक्लः स एव क्षीराश्रय इति प्रतिवस्तु भिन्ना एव गुणव्यक्तयः । भिन्नासु च येयमभिन्ना संज्ञा हिमस्यापि गुणः शुक्लः पयसोऽपि गुणः शुक्ल इत्यादिरूपा, यश्चासावभिन्नः प्रत्ययः तदुभयं नाहेतुकमुपपद्यते, यश्चास्य हेतुः स जातिरिति भावः । क्रियासु जातिं साधयति—**गुडतण्डुलेति** । गुडतण्डुलादीत्यादि[6]शब्दात् क्रिया[5]वदन्तरं पाकादीत्यादिशब्दाच्च क्रियान्तरमुपसंगृह्यते । अथ डित्था[7]दौ[8] शब्दे[9]ऽर्थे च ना[10]नात्वसाधनपुरस्कारेण जातिमायोजयति—**बालवृद्धेति प्रतिक्षणमिति** च । अर्थस्य प्रतिक्षणं भेदो वैनाशिकादिदर्शनाश्रयणात् । डि(त्थादित्वम? त्थत्वाद्य)स्ति । डित्थादिषु शब्देष्वर्थेषु वा परमार्थतो भिन्नेषु यद्वशेन डित्थो डित्थ

साहित्यचूडामणिः

एवं जात्यादिरिति निरूप्य जातिरेवेति पक्षं प्रस्तौति— **हिमेति** । एकरूपयोरभिधानप्रत्यययोरुत्पत्तिर्यद्वशेन तत् सामान्यम्, अनुवृत्ताभिधानप्रतीतिनिबन्धनत्वात् । **एवमिति** । यत्सामर्थ्येन पाकः पाक इत्याभिन्नयोर्व्यपदेशप्रतीत्योरुत्पत्तिः तत् पाकत्वं सामान्यम् । **बालेति** । डिम्भाद्युदीरितानां डित्थादिशब्दानामुदीरणभेदाद् भेद इत्येकः पक्षः, तदर्थानां तावत्यंशे सौगतमतानुसारेण प्रतिक्षणं भेदात् कथञ्चिद् व्यक्तिबाहुल्यमित्यपर इति

१. 'तिस्त', २. 'दिष्वप्येव' ख. पाठः. ३. 'म्बाल', ४. 'णादि' ख. ग. पाठः. ५. 'म्याव' क. घ. पाठः. ६. 'दिक्रि' ग. पाठः. ७. 'यान्त', ८. 'दौ च श' ख. पाठः. ९. 'ब्दा' क. पाठः. १०. 'नाजातिसा' ख. घ. पाठः.

प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये। तद्वानपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात् प्रकृतानुपयोगित्वाच्च न दर्शितम्।

---

सम्प्रदायप्रकाशिनी

इत्याद्यभिन्नाभिधानप्रत्ययोदयः, तद् डित्थत्वादिसामान्यमिति यत उपपत्तिरतोऽस्तीति भावः। मतमेतदुपसंहरति — **इति सर्वेषां शब्दानामित्यादि**[2]। **तद्वानिति**। तच्छब्देन सामान्यप्रत्यवमर्शः। तद्वान् सामान्यवान्। जातिविशिष्टा व्यक्तिरित्यर्थः। अपोहो व्यावृत्तिः। गौरित्यादावगवादिव्यावृत्तिमेव ह्यर्थमाहुरितरे जात्यभावात्। प्रस्तावं सञ्चुकोचयिषुराह — **ग्रन्थगौरवभयादिति**। गौरवमपि ग्रन्थस्याङ्गीकर्तव्यमेव स्याद् यद्युपयुज्येत प्रकृते। तदपि नास्तीत्याह — **प्रकृतानुपयोगित्वाच्चेति**[3]।

साहित्यचूडामणिः

डित्थादित्वसामान्यसिद्धिः। सर्वेषां[4] गवादीनामिव शुक्लपाकडित्थादीनामपि प्रवृत्तौ निमित्तं जातिरेव न गुणादिरित्यन्ये मन्यन्ते। एवञ्च,

"घटतीति घटो ज्ञेयो नाघटन् घटतामियात्।
अघटत्वाविशेषेण पटोऽपि स्याद् घटोऽन्यथा॥
घटना च घटात्मत्वापत्तिरूपा क्रिया मता।
यःकश्चिदर्थः शब्दानां व्युत्पत्तौ स्यान्निबन्धनम्॥
प्रवृत्तौ तु क्रियैवैका सत्तासादनलक्षणा।"

इति व्यक्तिविवेकपक्षः प्रत्यक्षेपि। तत्प्रपञ्चनमप्रस्तुतम्। **तद्वानिति**। जातिविशिष्टो विशेषः शब्दार्थ इति नैयायिकाः। अपोहस्तदितरव्यावृत्तिरिति सौगताः। तन्मतानुपन्यासे ग्रन्थविस्तरचाकित्यमेको हेतुः, प्रस्तुतानुपयोगो द्वितीयः।

---

१. 'त्थादित्वमस्त्वा' इति मूलकोशपाठः. २. 'दिना। त' ग. पाठः. ३. 'गाच्चे' ख. ग. पाठः. ४. 'स तेषां' ख. पाठः.

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते॥ ३॥**

स इति साक्षात् सङ्केतितः। अस्येति शब्दस्य॥ ३॥

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया॥ ४॥**

सम्प्रदायप्रकाशिनी

**स मुख्य** इति। यो हि जात्यादिरूपः संकेतितार्थः स मुख्यस्तत्प्रतिपादकः शब्दव्यापारोऽभिधेति।

सूत्रान्तरव्यवहितौ सर्वनामपरामर्शनीयौ शब्दतो दर्शयति— **स इति साक्षात्सङ्केतित** इति, **अस्येति शब्दस्ये**ति च॥ ३॥

इत्थं वाचकं शब्दं वाच्यमर्थमभिधालक्षणं व्यापारं च परिपाट्या प्रसाध्य लाक्षणिकस्य लक्ष्यस्य च स्वरूपनिरूपणं लक्षणा[2]स्वरूपनिरूपणैकायत्तमिति तामेवादौ निरूपयति—**मुख्यार्थबाध** इत्यादि। मुख्यार्थबाधे तद्योग इति निमित्तार्थे सप्तम्यौ। अतः प्रयोजनादिति पञ्चमीसमानार्थतया क्रियाभिसम्बन्धः। तद्योग इति तच्छब्देन सन्निहितो मुख्यार्थः परामृश्यते। मुख्यार्थेन सह लक्ष्यस्य सम्बन्धे विद्यमान इत्यर्थः। रूढितोऽथेत्यथशब्दो लक्षणाद्वयविभागप्रथनाय। उभयी हि लक्षणा रूढा चारूढा च। मुख्यार्थबाधः सम्बन्धश्चोभयोरपि साधारणः। रूढिप्रयोजने तु यथास्वं व्यवतिष्ठेते। यत् सेत्यत्र यदित्यव्ययं यत इत्यर्थे। यतो व्यापाराल्लक्षयति शब्दः सा लक्षणेत्यर्थः। नतु यल्लक्ष्यते सा लक्षणेति लक्ष्यार्थविशेषणतया योज्यम्। तथाच सति यल्लक्ष्यं सा लक्षणेत्यायातम्। नह्येषा लक्षणा। लक्ष्यत्वं ह्यर्थस्य धर्मः लक्षणा तु शब्दस्य। अतो यतो व्यापाराल्लक्षयति शब्दः, सा लक्षणेत्यवस्थितम्।

साहित्यचूडामणिः

स इति। मुख्यः प्राथमिकः न तु प्रधानभूतः यस्मादभिधा मुख्यो व्यापारः। एवमभिधायकः शब्दोऽपि मुख्यः॥ ३॥

अथ लक्षणां लक्षयति—**मुख्येति**। बाधः प्रमाणपराहतत्वम्। तद्योगे तेन बाधितेन मुख्यार्थेन सह लक्षयितुमभिलषितस्यार्थस्य सम्बन्धे।

१. 'न्नः प' ग. पाठः. २. 'णायाः स्व' क. घ. पाठः.

कर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगाद्, गङ्गायां घोष इत्यादौ च गङ्गादीनां घोषाद्यधिकरणत्वासम्भवाद् मुख्यार्थस्य बाधे, विवेचकत्वादौ सामीप्यादौ च सम्बन्धे, रूढितः प्रसिद्धेः, तथा गङ्गातटे घोष इत्यादेः प्रयोगाद् येषां तथा न प्रतिपत्तिस्तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादना-

सम्प्रदायप्रकाशिनी

तदेतत् सोदाहरणं व्याचष्टे—कर्मणि कुशल इत्यादि। दर्भग्रहणेति। कुशलपदानिरुक्तिः कुशान् लातीति। लक्षणान्तरार्थमुदाहरणान्तरं—गङ्गायां घोष इत्यादि। बाध इति। अभिमतवाक्यार्थाननुप्रवेशो मुख्यस्यार्थस्य बाधः। विवेचकत्वादौ सामीप्यादौ चेति विभागेन सम्बन्धः कथितः। तथेत्यथशब्दप्रतिबिम्बतया विभागो द्योतितः। ननु 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः', 'स्वायत्तश्च शब्दप्रयोग' इति न मुख्यपरित्यागो युक्तः, अमुख्याश्रयणं त्वयुक्ततरमिति कथं लक्षणावृत्तिरुपादेयेत्यत आह—गङ्गातटे घोष इत्यादेरित्यादि। येषां तथेति तथा प्रतिपादनात्मन इति चोभयत्रापि तथेत्यनेन मुख्यातिशायिता प्रत्याय्यते। मुख्यप्रयोगसमकक्ष्यकं चेत्[1] प्रयोजनं तदा नेष्यत एव लक्षणा। यत्तत् प्रयोजनं न मुख्याश्रयणे लभ्यते, तच्चेदमुख्याश्रयणे लभ्येत[2], ततो लक्षणेष्यत इति भावः। स आरोपित इति

साहित्यचूडामणिः

दर्भेति। कुशं लातीति कुशलः। नहि गमनादौ कर्मणि दर्भग्रहणं समस्ति। सैषा रूढिमूला। प्रयोजनमूलामप्याह—गङ्गायामिति। गङ्गादीनां प्रवाहादिरूपाणां घोषाद्यधिकरणतायामयोग्यत्वान्मुख्यस्याभिधेयस्यार्थस्य भङ्गे सति। प्रथमस्य विवेचकत्वादौ द्वितीयस्य सामीप्ये च सम्बन्धे। तथेति अथशब्दं व्याचष्टे। प्रयोगान्मुख्यभूतात्। तथा प्रतिपादनेति। यथा स्रोतसि तथा तटेऽपीति यत् प्रख्यापनं तद्रूपात् फलात्। यदिति वाक्यार्थपरामर्शे।

१. 'तु प्र' ख. ग. पाठः. २. 'भ्यते त' ख. पाठः.

त्मनः प्रयोजनाच्च मुख्येनामुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ॥ ४ ॥

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥ ५ ॥**

सम्प्रदायप्रकाशिनी

तदो व्यापारविशेषणतां सामानाधिकरण्येन दर्शयता यदोऽपि तत्परामर्शकत्वमासूचितम् । अतो यल्लक्ष्यत इति यदो लक्ष्यार्थविशेषणता ग्रन्थकृतोऽनभिमता ज्ञायते । व्यापार इति क्रियाशब्दविवृतिः । सान्तरार्थनिष्ठ इति आरोपितत्त्वोपपादनाय । निरन्तरार्थनिष्ठो व्यापारो नारोपितः, सान्तरार्थनिष्ठस्त्वारोपित इति यावत् । मुख्यव्यवहितत्वाल्लक्ष्यः सान्तरार्थः । मुख्यार्थबाधं सम्बन्धं रूढिप्रयोजनयोरन्यतरच्च निमित्तत्वेनाश्रित्य मुख्येनामुख्याक्षेपो लक्षणेति निष्कर्षः ॥ ४ ॥

तामिमां[१] शाखां द्विधा व्यापायितुमाह—स्वसिद्धय इति । सा लक्षणा उपादानं लक्षणं चेति द्विधोक्ता[२] उपादानलक्षणा लक्षणलक्षणा चेति द्विधा सोक्तेत्यर्थः । यथायोगमनयोर्लक्षणकथनं[३] — स्वसिद्धय इति परार्थमिति च । स्वसिद्धय इति स्वशब्द आत्मीयवचनः ।

साहित्यचूडामणिः

आरोपिता क्रियेति लक्षणाया लक्षणसंक्षेपः । क्रिया शब्दव्यापारः । अन्तरं व्यवधानं तत्सहितः सान्तरः तत्रार्थे निष्ठा तात्पर्यं यस्य । तथाहुः —

"अतस्मिंस्तत्समारोपो भक्तेर्लक्षणमिष्यते"

इति । प्रयोजनमूलायामेव लक्षणायां व्यञ्जनं, न रूढिमूलायाम् । यदाह—

"रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ॥"

इति । ये तु काकुयोजनया भवन्त्येवेति व्याकुर्वते ते सत्यमाशागृहीताः । कुशलपदमनुलोमप्रवीणाद्युपलक्षणम् ॥ ४ ॥

प्रयोजननिबन्धनां भूयो विभजते—स्वसिद्धय इति । उपादानं लक्षणामिति च भेदकेनोपाधिना व्यपदेशः । लक्ष्यलक्षकयुगलमेलकाध्यवसायो हि लक्षणा । तस्यां च तादात्म्यपर्यवसायिन्यां मुख्यार्थभङ्गक्लेशातिलङ्घननिब-

१. 'मां द्वि' क. ख. घ पाठः. २. 'शाखोक्त' ग पाठः. ३. 'गं लक्षणकथनमनयोः स्व' क. घ. पाठः. ४. 'मार्ग' क. ख. पाठः.

'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ती'त्यादौ कुन्तादिभिरात्मनः प्रवेशासिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते। तत उपादानेनेयं लक्षणा। 'गौरनुबन्ध्यं' इत्यादौ श्रुतिचोदि-

सम्प्रदायप्रकाशिनी

आत्मीयस्य वाक्यानुप्रवेशस्य सिद्धये परस्य स्वसम्बन्धिन आक्षेपः सामर्थ्यादानयनमुपादानलक्षणेत्यर्थः ।

तदेतत् सोदाहरणं व्याचष्टे — कुन्ताः प्रविशन्तीत्यादि । आत्मनः प्रवेशेति स्वशब्दस्यात्मीयवचनता प्रकाशिता। सूत्रे पराक्षेप इत्यत्र न परमात्रस्याक्षेपः, अपितु स्वसम्बन्धिन इत्याशयेनोपन्यस्तं स्वसंयोगिन इति । निर्ब्रुवन्नेव लक्षणां निगमयति — तत उपादानेति । यतः कुन्तादिभिरपरित्यक्तस्वरूपैरेव स्वसंयोगिन आक्षिप्यन्ते, अतः स्वरूपोपादानेनैव प्रवृत्तत्वादुपादानलक्षणेति । अथाविषये य उपादानलक्षणाधिया भ्रान्तास्तानुपहसन् विषयमस्याः सम्यग् विवेचयति — गौरनुबन्ध्ये इत्यादाविति। स्वकीयस्यानुबन्धनस्य सिद्धये जात्या व्यक्तिराक्षिप्यते । अनेन स्वसिद्धये पराक्षेप इति लक्षणं

साहित्यचूडामणिः

न्धनात् चमत्कारात् स्वसिद्धये पराक्षेपः । प्रयोजनोत्पत्तिनिमित्ताच्च तस्मात् परार्थे स्वसमर्पणम् । सम्बन्धः पुनरुभयोरविशेषेण सहकारीति विवेकः ।

कुन्ता इति। अचेतनत्वात् प्रवेशानौचित्यम्। संयोगः सम्बन्धः। पुरुषाणां शीघ्रप्रहर्तृत्वादिप्रकाशनं फलम्। आक्षिप्यन्ते लक्षणाशक्तेरानीयन्ते। स्वप्रवेशसिद्ध्यर्थं, कुन्तैः यत् पुरुषाणामुपादानं तदेव निष्कृष्टं वपुरस्या लक्षणायाः । प्रसङ्गादुपादानाभासं दूषयति — गौरिति । श्रुतिचोदितं प्रभुसम्मितत्वाद् गवानुबन्धनस्यावश्यकर्तव्यत्वात् कथं मे स्यादिति जातेरभिप्रायः प्रकाश्यते । जात्या गोत्वाकारया व्यक्तिः अनुबन्धनयोग्यः पिण्ड आक्षिप्यते

१. 'क्ष्यं त्वि' क. घ. पाठः. २. 'न्ध्या' ग. पाठः.

तमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते,

"विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे"

इति न्यायादित्युपादानलक्षणा नोदाहर्तव्या । नह्यत्र प्रयोजनमस्ति, नवा रूढिरियम् । व्यक्त्याविनाभावित्वात् तु

सम्प्रदायप्रकाशिनी

योजितम् । ननु व्यक्तावप्यभिधाङ्गीकारात् सापि वाच्यैवास्तु किं लक्षणयेत्यत आह — न तु शब्देनेति । तत्र हेतुमाह — विशेष्यं नाभिधा गच्छेदिति । गौरित्यत्र विशेष्यभूतां व्यक्तिमभिधा न गोचरयेत् । कुतः, क्षीणशक्तिर्विशेषणे विशेषणभूते गोत्व एव क्षीणसामर्थ्यत्वात् । गौरनुबन्ध्य इत्यादौ हि जातेः पदार्थत्वाद् गोत्वे चोदितमनुबन्धनं व्यक्तिमनाक्षिप्य न घटते । न च व्यक्तेर्वाच्यत्वं युक्तम् । 'नागृहीतविशेषणा विशेष्यबुद्धिरि'ति न्यायाद् विशेषणभूतायां जातावेव शक्तेरुपक्षयात् । यदुक्तं —

"भवेद् विशेष्यधीरेव नागृहीतविशेषणा ।
अतो जातिर्हि शब्दार्थो व्यक्तेस्त्वनवसानतः ॥"

इति । अनया दिशा यत् कैश्चिद् उपादानलक्षणेयमुदाहृता, तदयुक्तमित्याह — इत्युपादनलक्षणा नोदाहर्तव्येति । तत्र हेतुमाह — नह्यत्र प्रयोजनमस्ति नवा रूढिरियमिति । किमियं प्रयोजन-

साहित्यचूडामणिः

लक्षणयावरुध्यते । नन्वभिधैवास्तु इति चेन्नेत्याह — नत्विति । अत्र युक्तिं संवादयति — विशेष्यमिति । जातिर्विशेषणं व्यक्तिर्विशेष्यम् । तत्र जातौ[2] सङ्केतस्य प्रतिपादितत्वाद् गोशब्दस्याभिधावृत्तिस्तत्रैव परिसमाप्तसमस्तसामर्थ्या सती व्यक्तेर्वार्तामपि न वेदितुमर्हति, अतिप्रसङ्गात् । अतो जातिर्व्यक्तिरुभयमपि शब्दशक्त्या समर्प्यते इति न युक्तं वक्तुम् । किञ्चात्र लक्षणासामग्री न विद्यत इत्याह — नहीति । लक्षणावृत्तेरङ्गं प्रयोजनं नास्ति । न च

१. 'संभवति । ना' ग. पाठः. २. 'तैः सङ्केतित' क, घ. पाठः.

जात्या व्यक्तिराक्षिप्यते। यथा क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते, श्रुतार्थापत्तेर्दृष्टार्थापत्तेर्वा तस्य विषयत्वात्।

सम्प्रदायप्रकाशिनी

लक्षणा उत रूढा। न तावदाद्या, प्रयोजनाभावात्। मुख्यार्थधर्माणां हि लक्ष्यगतत्वप्रतीतिर्लक्षणायां प्रयोजनम्। नह्येतत् प्रकृते सम्भवति जातेरधर्मकत्वादिति भावः। नापि रूढा। रूढायां हि मुख्यार्थस्य स्थगनमेव। इह तु प्रतीताया जातेर्वाक्यार्थानुप्रवेशाय प्रयास इति कथं रूढिलक्षणा। तर्ह्यभिधालक्षणयोर्द्वयोरप्यनुपपत्तौ व्यक्तिप्रतीतेः का गतिरित्यत आह—व्यक्त्यविनाभावित्वादिति। द्विविधो ह्याक्षेपः लक्षणामूलोऽविनाभावमूलश्च। इहाविनाभावमूलेनैवार्थान्तरप्रतीतिर्न लक्षणामूलेनेति[3] यावत्। विषयान्तरेऽपि लक्षणानैरपेक्ष्येणाविनाभावेनैवाक्षेपसिद्धिं दर्शयति—यथा क्रियतामित्यत्रेत्यादि। अत्र हि कर्मैव लकारस्यार्थः। तत् तु स्वात्मन्यपर्यवसानात् कर्तारमाक्षिपति। तथा कुर्वित्यत्र कर्ता कर्माक्षिपति। अथ क्रियाकारकविशेषयोर्मिथोऽप्याक्षेपकत्वं दर्शयति— प्रविश पिण्डीमित्यादि। प्रसङ्गादर्थापत्तावपि लक्षणाभ्रमो न कार्य इत्याह—पीनो देवदत्त इति। शब्दप्रमाणाधिगतस्यार्थस्यानुपपत्तौ[4]वर्थान्तरकल्पनं श्रुतार्थापत्तिः। प्रत्य-

साहित्यचूडामणिः

रूढिमूलत्वं मुख्यार्थभङ्गाभावादित्याह—नवेति। अथ कथं व्यक्तेः प्रतीत्युपाय इत्यत्राह—व्यक्तीति। आक्षेपोऽत्र सामर्थ्यादाकर्षः। अविनाभावमूल आक्षेपे किं लक्षणानिबन्धेन। आक्षेप्यतया सम्प्रतिपन्नं सामान्यादुपदर्शयति—क्रियतामिति। विशेषतोऽप्युपपादयति—प्रविशेति। क्रमेण योजना। यद्वा किं बहुनोक्तेन क्रियाकारकयोरपि यत्रौचित्यादवगतिस्तत्रान्येषां कथैव केत्युक्तत्वात्। अथार्थापत्तावपि युक्तिमेनां योजयति—पीन इति।

१. 'त्र रा' क. पाठः. २. 'क्यान्तु', ३. 'णयेति' क. ख. घ. पाठः.
४. 'स्यार्थो' क. घ. पाठः.

गङ्गायां घोष इत्यत्र तटस्य घोषाधिकरणतासिद्धये गङ्गाशब्दः स्वार्थमर्पयतीत्येवमादौ[2] लक्षणेनैषा लक्षणा। उभयरूपा चेयं शुद्धा उपचारेणामिश्रत्वात्। अनयोर्भेदयोर्लक्ष्यस्य

सम्प्रदायप्रकाशिनी

क्षादिप्रमाणान्तराधिगतस्यार्थस्य[3] त्वन्या।

एवमुपादानलक्षणाया विषयं यथावद् विभज्य लक्षणलक्षणामुदाहृत्य दर्शयति— गङ्गायां घोष :इत्यादि। तटस्य घोषाधिकरणतासिद्धये स्वार्थमर्पयति[4] त्यजति। इदं परार्थे स्वसमर्पणमिति लक्षणयोजनम्। परार्थे तटादेर्घोषाधिकरणतादिप्रयोजनसिद्धये स्वात्मनस्त्यागः। लक्षणेनैषा लक्षणेति। लक्षणमुपलक्षणं तेनोपलक्षितत्वाल्लक्षणलक्षणेत्यर्थः। अथ शुद्धैवेति[5] सौत्रं पदं व्याचष्टे—उभयरूपा चेयमित्यादि। मुख्यलक्ष्ययोर्हि ताद्रूप्यप्रतीतिः शुद्धता। शुद्धौ हेतुमाह—उपचारेणामिश्रत्वादिति। गौर्वाहीक इत्यादिवद् भेदेन प्रतीतयोरैक्यारोपणमुपचारः। तदेवानुपचरितत्वमुपपादयति — अनयोर्भेदयोरिति। अनयोः उपादानलक्षणमु-

साहित्यचूडामणिः

न लक्ष्यते न लक्षणया प्रकाश्यते प्रमाणान्तरेण समर्पणीयत्वात्। श्रुतेति। अनुपपद्यमानस्य पीनत्वादेः शब्दप्रमाणाधीनत्वे श्रुतार्थापत्तिः। तस्यैव प्रत्यक्षादिप्रमाणान्तरग्राह्यत्वे दृष्टार्थापत्तिः। शब्दस्य प्राधान्यप्रतिपादनाय प्रागुपादानम्। यदाहुः—"दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थान्तरकल्पनमर्थापत्तिः" इति। अर्थापत्तेरनुमान्तर्भावादविनाभावनिमित्तक एवाक्षेपः।

एवमुपादानं परीक्ष्य लक्षणं व्याख्याति—गङ्गायामिति। स्वार्थं स्रोतोलक्षणम्, इतरथा तत्र पावनत्वादिकं न प्रतीयेत। लक्षणेनेति। गङ्गास्वलक्षणेन ह्येषा लक्षणा गङ्गायामित्यधिकरणनिर्देशात्। शुद्धिं विवृणुते— उभयेति। उपचारेणामिश्रणं शुद्धिरिति सङ्क्षेपः। उपक्रान्तं प्रमेयं स्पष्टयति — अनयोरित्यारभ्य ताटस्थ्यमित्यन्तम्। लक्ष्यस्य सान्तरार्थस्य तटादेः लक्षकस्य गङ्गाद्यर्थस्य तच्छब्दस्य तदुभयस्य वा भेदरूपमन्योन्याभावस्वभावं

१. 'वाद्यधि', २. 'र्थं' सम' ख. पाठः. ३. 'क्षप्रमाणाधि' क. घ. पाठः. ४. 'तीति त्य' ख. पाठः. ५. 'णैषा। अ' ग. पाठः. ६. 'णा' क. पाठः. ७. 'धृ-युपु' ग. पाठः.

लक्षकस्य च न भेदरूपं ताटस्थ्यम् । तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः । गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः ॥ ५ ॥

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

---

सम्प्रदायप्रकाशिनी

लयोः । ताटस्थ्यमुपचरितत्वम् । ताटस्थ्यस्य भेदरूपत्वान्न तदिहास्तीत्यर्थः । ताटस्थ्याभावमन्वयतो दर्शयति तावत् — तटादीनामिति । गङ्गादिशब्देनैव हि तटादिप्रतिपादनं ताद्रूप्यप्रतिपत्तये । ताद्रूप्यप्रतिपत्तावेव हि गङ्गादिधर्मधर्मित्वेन तटादिप्रतीतिलक्षणस्य प्रयोजनस्य सम्यक्प्रतीतिः । व्यतिरेकतोऽपि दर्शयति — गङ्गासम्बन्धेत्यादि । भेदो विशेष इत्यर्थः ॥ ५ ॥

अथ लक्षणान्तरमाह — सारोपान्या त्विति । अन्या शुद्धतः । तुशब्दो वैधर्म्यद्योतनाय ।

साहित्यचूडामणिः

ताटस्थ्यलक्षणं माध्यस्थ्यं न विद्यते । तत्सम्भावनायामभेदव्यवहारकौतूहलेऽपि भेदप्रथाशङ्कोरनुद्धारः स्यात् । एतदेवोपचारेणामिश्रत्वं यदनयोः सादृश्यप्रयोजितात् स्वशब्दप्रयोगादैकात्म्ययोजनायामप्रागल्भ्यम् । तत्र हेतुमाह — तटेति । तस्य भावस्तत्त्वं तादात्म्यं तटादेर्गङ्गात्वादिरूपं तस्य प्रतिपत्तौ । हिर्हेतौ । प्रतिपादयितुमिष्टस्य प्रयोजनस्य शीघ्रप्रहारातिपावनत्वादिरूपस्य सम्प्रत्ययः । अन्यथा मुख्यशब्दप्रयोगाल्लक्षणाया विशेषापलापप्रसङ्ग इत्याशयवानाह — गङ्गेति । तादात्म्यप्रतिपत्तिनियमनिरासेन गङ्गासम्बन्धमात्रस्य सातिशयपावनत्वनिरपेक्षस्य प्रतीतौ विवक्षितायां गङ्गायाः सम्बन्धिनि तीरे घोष इत्येवंरूपान्मुख्यशब्दाभिधानाद् गङ्गायां तटे घोष इति सप्तमीद्वयसामानाधिकरण्यलक्षणाया लक्षणायाः किं वैलक्षण्यं, वृत्त्यन्तरपरिग्रहप्रयास एव फलम् ॥ ५ ॥

अथ गौणीमपि लक्षणायामन्तः पातयितुं पुनर्विभागमाह — सारोपेति आरोप्यमाणः गवादिः आरोपविषयश्च वाहीकप्रभृतिः ।

---

१. 'स्व प्रभे' क. पाठः. २. 'ङ्गादिश' ग. पाठः.

आरोप्यमाणः आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ।

**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥ ६ ॥**

विषयिणारोप्यमाणेनान्तःकृते[1] निगीर्णे अन्यस्मिन् आरोपविषये सति सा साध्यवसानिका स्यात् ॥

---

सम्प्रदायप्रकाशिनी

तदेतद् व्याचष्टे—**आरोप्यमाण** इत्यादि । विषयविषयिणावारोपप्रस्तावात् तन्निबन्धनावित्यभिप्रेत्य आरोप्यमाण आरोपविषयश्चेत्युक्तम् । आरोप्यमाण इति विषयिशब्दोऽपि व्याख्यातः । आयुर्घृतमित्यादौ हि आयुष्ट्वाद्यारोपस्य विषयो घृतादिः । आयुरादिरेवारोप्यमाणो विषयी । अनपह्नुतभेदाविति तुशब्दद्योत्यं शुद्धलक्षणातो वैधर्म्यम् । सामानाधिकरण्येनेति तथाशब्दार्थः । निर्दिश्येते इति लटा सौत्रस्य क्ताविति पदस्य भूतार्थतायामविवक्षा दर्शिता । आयुर्घृतमित्यादौ हि शब्दद्वयेन भेदतः प्रतीतयोरैक्यस्यारोपितत्वप्रतीतेरियं सारोपा ।

अस्या एव विशेषान्तरमाह—**विषय्यन्त**रित्यादि । आयुरेवेदमित्यादौ हि आरोपविषयिणायुषा विषयो घृतादिरपह्नूयते । अतः साध्यवसानेयम् । अध्यवसानं निश्चयज्ञानम् । तदिह अतस्मिंस्तदेवेत्यध्यासरूपम् ॥ ६ ॥

साहित्यचूडामणिः

तथाशब्दं व्याचष्टे—**अनपह्नुतेति** । येन प्रकारेण द्वयोः स्वलक्षणस्फुरणं तथोक्तौ गोत्ववाहीकत्वादिस्वलक्षणयुगलविशेषानपलापपूर्वकमुपन्यस्तौ । एतदार्थं तथात्वम् । शाब्दं तु सामानाधिकरण्येन निर्देशः ।

एतद्विपर्ययलक्षणामन्यामपि गौणीं लक्षणायां निमज्जयति—**विषयी**ति । आरोप्यमाणो गवादिर्विषयी तेनारोपविषये वाहीकादौ कवलिते साध्यवसाना नाम लक्षणा ॥ ६ ॥

---

१. 'ना स्या' क. पाठः. २. 'अप' ग. पाठः.

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ**

इमावारोपाध्यवसानरूपौ। सादृश्यहेतू[2] भेदौ गौर्वाहीक इत्यत्र गौरयमित्यत्र[3] च। अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित्। स्वार्थसह-

सम्प्रदायप्रकाशिनी

द्वयोरपि द्वैविध्यं दर्शयति—**भेदाविमौ** चेति। सादृश्याद् गौणौ सम्बन्धान्तरतः शुद्धाविति विभागः।

स्त्रीलिङ्गान्तत्वेन निर्दिष्टयोर्भेदावित्यनेन सह सामानाधिकरण्यस्वारस्यायाह— **आरोपाध्यवसानरूपाविति**। गौणावुदाहर्तुमाह— **सादृश्यहेतू** इत्यादि। गौर्वाहीक इति गौणसारोपा। गौरयमिति गौणसाध्यवसाना। अतः सादृश्यसम्बन्धप्रवृत्तौ लक्षणाविशेष एवायं, नतु गौणी नाम वृत्त्यन्तरं किञ्चिदिति भावः। अत्राचार्यविमतीरुपन्यस्यति—**अत्र हि स्वार्थे**त्यादि। गौर्वाहीक इत्यत्र गोशब्देन स्वार्थो गौरभिधीयते। तस्य वाहीकविशेषणत्वानुप-

साहित्यचूडामणिः

अनयोः प्रत्येकं गौणशुद्धविभागमाह— **भेदाविति**। यथोद्देशमिति सादृश्याद् गौणौ सम्बन्धान्तरतः शुद्धौ। एतदेवानयोः शुद्धत्वं, यत् सादृश्यमात्रानुप्राणनाया गौणताया अवधीरणम्। ननु स्वशब्दप्रयोगवत्यो लक्षणा गौण्य इति प्राङ् निरणायि, इदानीं तु सादृश्यवती वृत्तिर्गौणीति पूर्वापरविरोध इति चेत्। न। अन्यपक्षापेक्षया स्वशब्दप्रयोगवती गौणी स्वमतेन तु सादृश्यवतीति न कश्चिद् विरोधः। तत्र पक्षत्रयमुपक्षिपति—**अत्र हीति**। **स्वार्थेति**। गोशब्दस्य यः स्वार्थः सास्नादिमद्रूपः तेन सह चरितुं शीलं

१. 'मौ सारोपसाध्यव' इति मूलके शपाठः. २. 'तुकौ भे', ३. 'रेवाय', ४. 'त', ५. 'तिमुप' ख. पाठः. ६. 'हि' क. ग. घ. पाठः.

चारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, नतु परार्थो- ऽभिधीयते इत्यन्ये। साधारणगुणाश्रयणेन परार्थ एव ल- क्ष्यत इत्यपरे। उक्तं चान्यत्र —

सम्प्रदायप्रकाशिनी

पत्तौ गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते। अथ लक्षि- तानिमान् प्रवृत्तिनिमित्तीकृत्य वाहीकोऽभिधीयत इत्येकं मतम्। त्रिरेवं व्यापारकल्पनामसहमानानां पुनर्मतं — स्वार्थसहचारीति। स्वा- र्थसहचारिगुणसाजात्यसम्बन्धाद् वाहीकगुणा एव गोशब्देन लक्ष्यन्ते, नतु वाहीकोऽभिधीयते। स हि स्वगुणैरविनाभावेनाक्षिप्यत इत्या- ह — नतु परार्थ इति। अथ सिद्धान्तः — साधारणगुणेति। गुणसाधारण्यं सम्बन्धमाश्रित्य परार्थ एव लक्ष्यते।

साहित्यचूडामणिः

येषाम्। लक्ष्यमाणा अपीत्यपिशब्देन यत्नगौरवदोषः सोढव्य इत्युद्भाव्यते। परो वाहीकशब्दः, गोशब्दस्येति प्रस्तुतत्वात्। तदर्थस्य वाहीकस्याभिधाने प्र- वृत्तिनिमित्तभावं प्रतिपद्यन्ते इति केचित्। अत्र गोशब्दस्यैकस्य जडिमादिगुणेषु लक्षणा वाहीकशब्दार्थे पुनरभिधा इति यत्नगौरवम्। असम्मतमर्थं प्रत्यभिधायाः प्रवृत्तिरित्यपि दोषः। एतत् परिहर्तुमन्ये मन्यन्त इत्याह — स्वार्थेति। स्वार्थ- सहचारिभ्यो गुणेभ्यो यस्तज्जातीयत्वादभेदः तेन परार्थगता गुणा एव ल- क्ष्यन्ते, न स्वार्थगताः। एवकारव्यावर्त्यमाह — नत्विति। अत्राभिधाया अनङ्गीकारान्न यत्नगौरवं, किन्तु यद्यपि जडिमादिगुणलक्षणा तथापि वाहीका- दिगुणवत्पदार्थप्रतीतिरनिबन्धना स्याद् इति शङ्कमानाः परे संगिरन्त इ- त्याह — साधारणेति। गवि वाहीके च वर्तमानानां गुणानामाश्रयणेन परार्थ एव लक्ष्यते नतु जडिमादयो गुणाः। अथ परार्थो लक्ष्यत एव न कदाचि- दभिधीयते इत्युभयतोमुखमवधारणम्। एवञ्च न कश्चिदुक्तदोषावकाशः। किञ्च शब्दारोपपूर्वकोऽर्थारोप इति केचित्। अर्थारोपपुरस्सरः शब्दारोप इत्यन्ये। समप्राधान्याद् द्वयोरारोप इत्यपरे। इयमेव समीचीना सरणिः काव्यव्यवहारे सर्वत्र शब्दार्थयोरविनाभावात्। यदाहोद्भटः — "केचिच्छ-

१. 'स्वगुणस' ग. पाठः.

"अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥"

इति । अविनाभावोऽत्र सम्बन्धमात्रं, नतु नान्तरीयकत्वम् । तत्त्वे हि मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात् । अवि-

सम्प्रदायप्रकाशिनी

उक्तार्थे प्रामाणिकसंवादायाह—अभिधेयाविनाभूतेति[1] । अविनाभूतस्यार्थस्य प्रतीतिरित्यर्थः ।

नन्वविनाभावे लक्षणा गुणयोगे गौणीति भेदोऽत्र प्रतीयते, कथमभेदसंवादकत्वेन दर्शिता[2] कारिकेत्यत आह—अविनाभावोऽत्रेति । नान्तरीयकत्वमपृथग्भावः । तत्त्वे हीति । अविनाभावपदस्य नान्तरीयकार्थत्वेऽभ्युपगत इत्यर्थः । लक्षणा न स्यादिति । अवि·

साहित्यचूडामणिः

ब्दारोपपूर्वमर्थारोपं ब्रुवते । अपरे विपर्ययम् । अन्ये यौगपद्यम् । एष एव युक्तः पक्ष" इति । यच्चोक्तं लोचने—"लक्षणा तावद्-गौणीमपि व्याप्नोति । केवलं शब्दस्तमर्थं लक्षयित्वा तेनैव सह सामानाधिकरण्यं भजते । अर्थो वार्थान्तरं लक्षयित्वा स्ववाचकेन तद्वाचकं समानाधिकरणं करोति । शब्दार्थौ वा युगपद् लक्षयित्वा ताभ्यामेव शब्दार्थाभ्यां मिश्रीभवतः" इति । सर्वथा गौणे शब्दप्रयोगो न लक्षणायामिति स्वशब्दप्रयोगो नियमभावी । एतेन,

"यस्तु तत्त्वसमारोपस्तत्संबन्धनिबन्धनः ।
मुख्यार्थबाधे सोऽप्यार्थं सम्बन्धमनुमापयेत् ॥
तत्साम्यतत्सम्बन्धौ हि तत्त्वारोपैककारणम् ।
गुणवृत्तेर्द्विरूपायास्तत्प्रतीतिरतोऽनुमा ॥"
"गुणवृत्तौ गिरां यावत्सामग्रीष्टा निबन्धनम् ।
सैव लिङ्गतयास्माभिरिष्यतेऽर्थान्तरं प्रति ॥"

१. 'ता प्रतीतिर्लक्षणोच्यत इति ।' क. पाठः. २. 'दत्वे' क. ख. घ. पाठः.

नाभावे चाक्षेपेणैव सिद्धे लक्षणाया नोपयोग इत्युक्तम् । आयुर्घृतम् आयुरेवेदमित्यादौ च सादृश्यादन्यत् कार्यकारणभा-

सम्प्रदायप्रकाशिनी

नाभावाभावादिति शेषः । दोषान्तरमाह — अविनाभावे चेति । उक्तमिति । गौरनुबन्ध्य इति प्रस्तावे । अथ शुद्धलक्षणाद्वयमुदाहरति — आयुर्घृतम् आयुरेवेदमिति । अथ यत्र येन धर्मेण प्रवृत्तिर्लक्षणायास्तत्र तेनैव तद्व्यपदेशो भवतीति व्युत्पादयति — एवमादौ च कार्येति पूर्वमारोपेति च । भेदचतुष्टयेऽपि प्रयोजनं विविच्य दर्शयति

साहित्यचूडामणिः

"किञ्च

तुल्यादिषु हि लोकोऽर्थेष्वर्थं तद्दर्शनंस्मृतम् ।
आरोपयेन्न शब्दं तु स्वार्थमात्रानुयायिनम् ॥
इत्थमर्थान्तरे शब्दवृत्तेरनुपपत्तितः ।
फले लिङ्गैकगम्ये स्यात् कुतः शब्दः स्खलद्गतिः ॥
प्रधानेतरभावेनावस्थानादर्थशब्दयोः ।
समशीर्षिकयारोपो न तयोरुपपद्यते ॥"

इति ध्वनिवादनिराकरणे पादप्रसारिकायमाणो व्यक्तिविवेकखण्डः प्रत्याख्यातः, यस्मादभिधाया उपरि लक्षणा तदुपरि व्यञ्जनम् एवमभिधाया उपरि व्यञ्जनमिति तृतीयोऽपि शब्दव्यापारः समर्थयिष्यते । तस्य चानुमानानन्तःपातः प्रपञ्चेन पञ्चमे प्रपञ्चयिष्यते । संवादग्रन्थं विमृशति — अविनाभाव इति । नान्तरीयकत्वं व्याप्तिः[2] प्रतिबन्धोऽनौपाधिकः[4] सम्बन्धोऽविनाभाव इत्यादिरेकोऽर्थः । विपक्षे बाधकमाह— तत्त्व इति । मञ्चस्य पुरुषाणां च व्याप्तेरभावात् । संभवे दोषमाह — अविनाभाव इति । सिद्धेरिति । अर्थाल्लक्षणीयस्यार्थस्याविनाभावनिबन्धनाक्षे(पला?पाल्ला)भे निष्फलो लक्षणामूलाक्षेप इत्युक्तम् । इत्थं च लक्षणाया अनुमानान्तर्भावो न घटते, तस्याविनाभावव्यतिरेकेऽनुत्थानाल्लक्षणायास्तु संबन्धमात्रेणापि प्रवृत्तिदर्शनादिति व्यक्तिविवेकवितथीकारार्थः प्रयासः । अथ संबन्धान्तरत इत्येतत् पर्यालोचयति— आयु-

१. 'नं' क. ख. पाठः. २. 'प्तिः' ख. पाठ. ३. 'प्रब' ग. पाठः. ४ 'न्धो' ख. पाठः. ५. 'मुपक्षिपति—त' ग. पाठः.

वादि सम्बन्धान्तरम् । एवमादौ च कार्यकारणभावादिलक्षणसम्बन्धपूर्वमारोपाध्यवसाने । अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनं, शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि । क्वचित् ताद-

---

**सम्प्रदायप्रकाशिनी**

लक्षणाविवेचनस्य तदर्थत्वात्— अत्र गौणभेदयोर्भेदेऽपीत्यादि । भेदेऽपि मुख्यलक्ष्ययोर्भेदप्रतीतावपीत्यर्थः । ताद्रूप्यप्रतीतिः सारोपायाम् । सर्वथैवाभेदावगमः साध्यवसानायाम् । भेदेन प्रतीतयोर्गोवाहीकयोरभेदारोपरूपया लक्षणया ताद्रूप्यादिः प्रयोजनत्वेन प्रत्याय्यत इति भावः । शुद्धभेदयोस्त्विति । घृतायुरादिकयोरभेदावगमः शुद्धिः । तत्र[2] प्रयोजकम्[3]न्यदेवेति भावः । अन्यवैलक्षण्येनाव्यभिचारेणेति च विभागेन प्रयोजनोक्तिः । अथोपचारप्रवृत्तौ

**साहित्यचूडामणिः**

रिति । इयं सारोपा । आयुरेवेदमिति साध्यवसाना । सादृश्यादन्यदिति गौणत्वव्यतिरेकेण शुद्धत्वमनयोः स्वभावः । आयुः कार्यं घृतं च कारणम् । यथाहुः—

"शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम्"

इति । ननु गौणभेदयोः

"लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता"

इत्युक्तयुक्त्या विषयविषयिसाधारण(द्रव्य ? )जडिमादिगुणग्रहणपूर्वकमारोपणमध्यवसानं चासीत्, कथं पुनः संबन्धान्तरनिबन्धनयोरित्यत्राह — एवमादाविति । गौणभेदयोः फलमुपदिशति — अत्रेति । गोवाहीकयोर्वैलक्षण्येऽपि शब्दशक्तिसमर्पिततादात्म्यप्रतिपत्तिः फलं सारोपायाः । साध्यवसानायास्तु वस्तुस्वभावाधीनभेदप्रथाव्यतिरेकेण प्रतिपत्तिदशातारतम्यव्यपोहादेकतरस्योपलम्भः । शुद्धभेदयोरप्याह — शुद्धेति । अन्यवैलक्षण्येन सारोपायाः, साध्यवसानायाः पुनरव्यभिचारेण कार्यकारित्वं फलम् । अथादिपदोपात्तानि संबन्धान्तराणि दर्शयति — क्वचिदिति । सोऽर्थः प्रयोजनं यस्य तद्भावादुपचारः ।

---

१. 'र्वकमा' ख. पाठः. २. तदन्न' ग. पाठः, ३. 'म' क. घ. पाठः.

र्थ्यादुपचारः, यथेन्द्रार्थाः स्थूणा इन्द्रः । क्वचित् स्वस्वामिभावाद्, यथा राजकीयः पुरुषो राजा । क्वचिदवयवावयविभावाद्, यथा अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः । क्वचित् तात्कर्म्याद्, यथा अतक्षा तक्षणात् तक्षा ।

**लक्षणा तेन षड्विधा ॥ ७ ॥**

आद्यभेदाभ्यां सह ॥ ७ ॥

---

सम्प्रदायप्रकाशिनी

सम्बन्धवैविध्यं दर्शयति—यथेन्द्रार्थाः स्थूणा इत्यादि । या हि यज्ञे इन्द्रार्थं निखन्यन्ते तासामिन्द्र इत्येवोपचारः । राजपुरुषस्य राजत्वोपचारः स्वस्वामिभावात् । स्वशब्द आत्मीयवचनः इह भृत्यपरः । भृत्यस्वामिभावादित्यर्थः । हस्ताग्रमात्रस्य हस्त इत्युपचारः अवयवावयविभावात् । तस्य मुख्यस्य कर्म तक्षणाद्यस्यास्तीति तत्कर्मा, तस्य भावस्तात्कर्म्यम् । तक्षा स्थपतिः ।

अथ[1] लक्षणोपसंहारः—लक्षणा तेनेति ।

व्यवहितं भेदद्वयं स्मारयति—आद्यभेदाभ्यामिति । उपादानलक्षणा लक्षणलक्षणा गौणसारोपा गौणसाध्यवसाना शुद्धसारोपा शुद्धसाध्यवसाना चेति । लक्षणाप्रघट्टकोऽयमस्माभिर्लघुटीकायां वितत्य विवेचित इति ततोऽवधार्यः । इहापि यथोपयोगमुक्तः ॥ ७ ॥

साहित्यचूडामणिः

स्थूणा लोहप्रतिमा सैवेन्द्रः । अग्रमात्र इति । पूर्णावयवे हस्ते हस्तशब्दस्य सङ्केतः, अङ्गुल्यादावयवमात्रे पुनरुपचारः । यदाह वामनः—"हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाद्" इति । तात्कर्म्यात् तादर्थ्यादितिवत् । अतक्षापि कश्चिद् ब्राह्मणादिस्तक्षा वास्यादिशालितया तत्कर्मत्वात् ।

निगमयति—लक्षणेति । ननु सारोपा साध्यवसानेति द्वे गौण्यौ द्वे च शुद्धे इति ताश्चतस्रः, तत् कथं वा षाड्विध्यमित्यत्राह—आद्येति । प्रागुक्तौ भेदावुपादानलक्षणलक्षणौ ताभ्यां सहेति ॥ ७ ॥

---

१. 'थ तस्य ल' ख, 'थ च ल' ग. पाठः.

सा च—

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।**

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ।

**तच्च गूढमगूढं वा**

तच्चेति व्यङ्ग्यम् । गूढं यथा—

सम्प्रदायप्रकाशिनी

ननु षड्विधाप्यसौ रूढा चारूढा चेति द्विधोपदर्शिता । तत्र कतरस्याः कतर उपयोग इत्यत आह—सा च व्यङ्ग्येन रहितेत्यादि । अतो रूढलक्षणाया हेयत्वेन विवेचनं कृतम्, अरूढायास्तूपादेयतयेति मन्तव्यम् ।

ननु प्रयोजने सति कथमियं व्यङ्ग्यसहितेत्यत आह— प्रयोजनं हीति । हिर्हेतौ । प्रयोजनस्य व्यञ्जनव्यापारैकसमधिगम्यत्वादित्यर्थः ।

यदेतदेवं व्यङ्ग्यत्वेन प्रतिज्ञातं प्रयोजनं, तस्य यथायोगं ध्वनिगुणीभूतव्यङ्ग्योपयोगितामुपक्षेतुं द्वैविध्यं दर्शयति— तच्च गूढमित्यादि ।

साहित्यचूडामणिः

इति लक्षणां परीक्ष्य तन्मूलं व्यञ्जनं प्रतिष्ठापयितुमुपक्रमते — सा चेति । रूढौ प्रसिद्धिनिबन्धने कुशलादिप्रयोगे लक्षणा व्यङ्ग्येन रहिता । उक्तं हि—

"निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्"

इति । वाच्यवाचकभावप्राय एव हि तत्र लक्ष्यलक्षकभावः । क्वचित् प्रयोजननिबन्धने सा व्यङ्ग्येन सहिता ।

कथं फलसाहित्ये व्यङ्ग्यसाहित्यमित्यत्राह—प्रयोजनं हीति । लक्षणायां फलं व्यञ्जनेनैव बोद्धव्यम् । यच्च तादृक् फलं तदेव व्यङ्ग्यमिति यावत् ।[1]

तच्चेति । गूढव्यङ्ग्यत्वे ध्वनित्वं, विपर्यये गुणीभूतव्यङ्ग्यता । यद् वक्ष्यति— "अगूढमपरस्याङ्गम्" इति । वाकारः समुच्चये ।

1. 'या । न' क, ख, घ, पाठः

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षणं
समुच्चलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥

सम्प्रदायप्रकाशिनी

मुखं विकसितेति । विकसितत्वेन प्रसृतत्वं, वशीकृतत्वेनायत्तत्वं, समुच्चलनेनातिप्रकाश इत्यादिर्लक्ष्यते । अत्रैतदाकूतं — यत्र वाच्यायमानत्वेन झटिति प्रतीतिर्लक्ष्यस्य, तत्र व्यङ्ग्यमगूढमिति, अत्र तु गूढम् ।

साहित्यचूडामणिः

मुखमिति । अत्र विकासः पुष्पधर्मः स्मितस्य नोपपद्यत इति मुख्यार्थभङ्गः । किञ्चिदुच्छूनावस्थत्वं लक्ष्यम् । संकोचव्युदासलक्षणं साधर्म्यं सम्बन्धः सौरभवत्त्वादि व्यङ्ग्यं फलम् । वशितत्वं चेतनस्वभावः, स नयनक्रियायां वक्रिमणि न घटते इति मुख्यार्थबाधः । स्वाधीनता लक्ष्या । यथाभिलषितविषयावगाहनरूपं साधर्म्यं सम्बन्धः । उचितपुरुषानुरागो व्यङ्ग्यम् । समुच्चलनं मूर्तधर्मः, तद् विभ्रमे भावविशेषे नोपपद्यते । अतिशयितत्वं लक्ष्यम् । कार्यकारणभावः सम्बन्धः, अनतिशयितस्य कस्यचिदुच्चलनाभावात् । अभियोगयोग्यत्वं व्यङ्ग्यम् । संस्था स्वलक्षणसम्बन्धिन्यवस्था । तत्त्यागश्चेतनधर्मो मतौ चित्तवृत्तौ न सम्भवति । तादात्विकं वैदग्ध्यं लक्ष्यम् । कार्यकारणभावः सम्बन्धः, बाल्यपरित्याग एव वैदग्ध्यस्यौचित्यात् । गुरुसमीपे व्यलीकगोपनं व्यङ्ग्यम् । मुकुलनमपि पुष्पधर्मः । तदङ्गनास्तनयोः प्रयुज्यमानं तयोरुज्जृम्भणोन्मुख्यं लक्षयति । अनुद्भूतावयवत्वरूपं साधर्म्यं सम्बन्धः । रूपातिशयो द्योत्यः । अंसबन्धो देहस्य स्वभावः, नतु तदवयवस्य । जघनमात्रस्य मांसलत्वं लक्ष्यम् । गुणगुणिभावः सम्बन्धः । अंसस्य हि गुणो मांसलत्वम् । उपभोगयोग्यवयस्कत्वं व्यङ्ग्यम् । उद्गम उच्चलनवन्मूर्तधर्मः । स तारुण्ये कथमुपपद्यते इति तेन तत्प्रथमा समुद्भूतिर्लक्ष्यते । कार्यकारणभावः सम्बन्धः, उद्भूतिमन्तरेणोद्गन्तु-

१. 'ग्यावयवत्वं' ग. पाठः.

अगूढं यथा—

स्त्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥

अत्रोपदिशतीति[1] ।

तदेषा कथिता त्रिधा ॥ ८ ॥

अव्यङ्ग्या गूढागूढव्यङ्ग्ये च ।

---

सम्प्रदायप्रकाशिनी

**स्त्रीपरिचयादिति** । ललितानि विलासाः ।

वाच्यायमानतां व्यङ्ग्यस्य दर्शयति—**अत्रोपदिशतीति** । उपदिशतीत्यत्र शिक्षयतीत्यर्थो वाच्यकल्पः ।

ननु लक्षणाभेदप्रस्तावे व्यङ्ग्यभेदोपवर्णनं कथमुपयुज्यत इत्येत आह[2]—**तदेषा कथितेति** । यतः इत्थं व्यङ्ग्यस्याभावो रूढलक्षणायां, यतश्चारूढायां गूढता[3]गूढता च, तत इयम् अव्यङ्ग्या गूढव्य[4]ङ्ग्या अगूढव्यङ्ग्या चेति त्रिधा कथितेत्यर्थः ॥ ८ ॥

साहित्यचूडामणिः

मशक्यत्वात् । विभक्तावयवत्वं व्यङ्ग्यम् । **मोदत इति** । मोदोऽपि चेतनस्वभावः स तरुणिमोद्गमे न सम्भवतीति तेन प्रसरद्रूपता लक्ष्या । सामान्यविशेषभावः सम्बन्धः । चित्तस्य प्रसरद्रूपताविशेष एव हि सुखाद्यनुभवः । अनितरसाधारणत्वं यौवनारम्भस्य व्यङ्ग्यम् । एवं च सर्वत्र गूढतया चमत्कारकारित्वं व्यङ्ग्यस्येति ।

**स्त्रीति** । पामरादयोऽपि स्त्रीणामभ्यासाच्छेकव्यवहारविदो भवन्ति । स्त्रीणां पुनस्तानि ललितानि तारुण्यदर्प एवोपादिशति । अत्रोपदेश आचार्यधर्मः तारुण्यमदस्य नोपपद्यते । अज्ञातज्ञापकत्वं लक्ष्यम् । सामान्यविशेषभावः सम्बन्धः । अज्ञातज्ञापनविशेषत्वाद् उपदेशस्य । अनायासेन शिक्षादानं गम्यम् । एतदभिधेयवत् प्रकटं भवदगूढं चमत्कारशून्यं प्रतीयते ॥

**तदिति** । अव्यङ्ग्या रूढिमूलत्वे, प्रयोजनमूलत्वे तु गूढव्यङ्ग्या अगूढव्यङ्ग्या चेति त्रिधा ॥ ८ ॥

---

१. 'तीत्यनायासेन शिक्षादानमभिधेयवत् स्फुटं प्रतीयते । त' ख. पाठः. २. 'स्याह' क. ख. घ. पाठः. ३. 'ता चागू', ४. 'ढागू' ग. पाठः.

**तद्भूर्लाक्षणिकः**

शब्द इति सम्बध्यते । तद्भूस्तदाश्रयः ।

**तत्र व्यापारो व्यञ्जनात्मकः ।**

कुत इत्याह —

---

सम्प्रदायप्रकाशिनी

अर्थ[1] वृत्तिं वृत्तिमति योजयति— **तद्भूर्लाक्षणिक** इति ।

स्याद्वाचक इत्यादिसूत्रस्थस्य शब्दशब्दस्य दूरान्तरितत्वात् सम्बन्धमनुस्मारयति — **शब्द इति सम्बध्यत** इति । तद्भूरित्यत्र ततो भवतीति भ्रमो मा भूदित्याह — **तदाश्रय** इति । तस्या लक्षणा[2]वृत्तेराश्रयोऽधिष्ठानम् ।

इत्थं लक्षणावृत्तिर्निरूपिता । क्रमागता व्यञ्जनवृत्तिस्तु निरूपणीया । सा चाभिधामूलतया लक्षणामूलतया च प्रथते । तत्राभिधामूलायाः प्रतीतिक्रमेण प्राथम्येऽपि लक्षणामूलायाः स्थूलतया सुज्ञानतामभिसन्धाय तन्मूलां प्रथमतः प्रस्तौति — **तत्र व्यापार** इत्यादि । तत्रेति प्रयोजने ।

ननु समन्वयसमनन्तरभाविनि प्रयोजने शाब्दत्वमेव तावत् कथम् । शाब्दत्वे वा कथमभिधाद्यविषयत्वमिति शङ्कामुत्थापयन् सूत्रमवतारयितुमाह — **कुत इत्याहेति** ।

साहित्यचूडामणिः

ननु किन्निबन्धनेयं व्यङ्ग्यार्थोद्भूतिरित्यत्राह — **तद्भूरिति** ।

कोऽयमिदानीं लाक्षणिक इत्याख्यायते इत्याकाङ्क्षायां प्रकरणलभ्य इत्याह — **शब्द** इति । तदाश्रयः तस्य व्यङ्ग्यस्योत्पत्तिस्थानम् ।

ननु लाक्षणिक एव शब्दो यदि व्यंङ्ग्यार्थप्रसावकः स्यात् तर्हि तस्य तत्र कीदृशो व्यापारः । लक्षणादेरेव स्वीकारे व्यङ्ग्यस्य लक्षणीयत्वादिप्रसङ्ग इत्याशङ्क्याह — **तत्रेति** । यस्य व्यङ्ग्यभूतस्य प्रतीतिमुपजनयितुं लक्षणाशक्तिराद्रियते, अत्र प्रयोजने लाक्षणिकशब्दैकप्रतिपाद्ये व्यञ्जनव्यतिरिक्ता क्रिया वृत्तिरन्या नास्तीति संक्षेपः ।

---

१. 'थ वृत्तिम' क ग. घ पाठः. २. 'णा' घ. पाठः.

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ ९ ॥**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।**

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणाशब्दप्रयोगस्तत्र नान्यतस्तत्प्रतिपत्तिः, अपितु तस्मादेव शब्दात् । न चात्र व्यञ्जनादृतेऽन्यो व्यापारः । तथाहि —

**नाभिधा समयाभावात्**

गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ

---

सम्प्रदायप्रकाशिनी

**यस्य प्रतीतिमिति** । यस्येति निस्सामान्यत्वप्रकाशनेन लक्षणावृत्तेः प्रयोजनैकप्राणतामाविष्करोति । समुपास्यते, गत्यन्तराभावाद् गतित्वेनाश्रीयत इति यावत् । एवम्भूतं लक्षणासमुपासनं फलस्य शब्दैकसमधिगम्यत्वे हेतुः । शब्दत एव हि प्रयोजनप्रतिपत्तये वृत्त्यन्तरकल्पनम् । तच्चेदशाब्दमङ्गीक्रियेत, तन्मूलहानिरेव लक्षणायाः स्यादिति भावः । **अत्रेति** । अदसः यत्प्रतियोगिता विवक्ष्यते । तत्रेत्यर्थः ॥ ९½ ॥

ननु कथं नापरा क्रियेत्यत आह — **नाभिधेत्यादि** । समयः सङ्केतः ।

तदभावं विविच्य दर्शयति — **गङ्गायामित्यादि** । धर्माः

साहित्यचूडामणिः

**प्रयोजनेति** । फलस्य प्रतिपादनेच्छया, अन्यथा लक्षणाप्रयोगस्य नैष्फल्यात् । शब्दैकगम्यत्वं विवृणुते — **नान्यत** इति । अत्र युक्तिं वक्ति— **तथाहीति** । तदेतद् घोषस्यातिपवित्रत्वादिकं प्रमाणान्तराप्रतिपन्नं वाहीके वा जाड्यातिशयवत्त्वम् । तत्र शब्दस्य तावन्न व्यापारः तत्सामीप्यादिना तद्धर्मकत्वानुमानमनैकान्तिकं गोशब्दवाच्यत्वं च वाहीकस्य न युक्तमिति ।

एतद् विशदयति — **नाभिधेति** ।

---

१. 'प्रमाण' क. ख. घ. पाठः. २. 'च्चेदशब्दाद' ग. पाठः. ३. 'सस्तत्र' क. ख. घ. पाठः.

प्रतीयन्ते न तत्र गङ्गादिशब्दाः संकेतिताः ।

**हेत्वभावान्न लक्षणा ॥ १० ॥**

मुख्यार्थबाधादित्रयं हेतुः । तथाच—

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।**
**न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥ ११ ॥**

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति, तद्वद् यदि तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत् ।

---

सम्प्रदायप्रकाशिनी

मुख्यार्थसमवायिनः । नहि पावनत्वादिस्रोतोधर्माणां तटगतत्वेन प्रतिपत्तौ गङ्गादिशब्दाः सङ्केतिताः ।

लक्षणां निराचिख्यासुराह— **हेत्वभावादित्यादि** ॥ १० ॥

तमेव हेत्वभावं वितत्य दर्शयति— **लक्ष्यं न मुख्यमित्यादि** । मुख्यार्थसंभवस्तद्बाधो मुख्येन सहान्यस्य सम्बन्धः प्रयोजनं स्खलद्गतित्वं चेति इयती लक्षणायां या सामग्री सा वाक्यपञ्चकेन परिपाट्या निरस्ता ।

तदेतद् व्याचष्टे— **यथा गङ्गाशब्द इत्यादिना** । प्रयोजने हि लक्ष्ये तटस्य मुख्यार्थत्वं बाधश्च न्याय्यः । न च तदुभयमपि

साहित्यचूडामणिः

**तटादा**विति । अतिशयवन्तो ये पावनत्वादयस्तटादौ प्रतीयन्ते तेषु गङ्गादिशब्दा न सङ्केतिताः । किं तर्हि, स्रोतःप्रभृताविति नाभिधा ।

ननु तत्र लक्षणास्तु अलं व्यञ्जनेनेत्यत्राह— **हेत्वभावादिति** ।

एतदुन्मीलयति— **लक्ष्यमिति** ।

गङ्गाशब्दः स्रोतसि सामयिके सबाध इति हि तटलक्षणौन्मुख्यं नान्यथा । तद्वद् यदि तटेऽपि बाधितः स्यात् तदा पावनत्वादिकं व्यञ्जननिरासाय लक्षयेत् । तर्हि तत्र कः प्रत्यूह इत्यत्राह— **नहीति** । तटं हि मुख्योऽर्थो न भवति, असंकेतितत्वात् । मुख्यार्थबाधो हि तस्याः प्रथमं निबन्धनम् । लक्ष्यस्य तटस्य मुख्यतैव नास्ति, का नाम कथा बाधशङ्कायाम् ।

न च तटं मुख्योऽर्थः । नाप्यत्र बाधः । न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः । नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम् । नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुं समर्थः ॥ ११ ॥

**एवमप्यनवस्था स्याद् या मूलक्षयकारिणी ।**

---

सम्प्रदायप्रकाशिनी

सम्भवति । समयाभावान्न मुख्यार्थता । घोषाधिकरणत्वसम्भवान्न बाधः । नच गङ्गाशब्दाभिधेयत्वेनाभिमतस्य तटस्य स्रोतोधर्मैः पावनत्वादिभिर्लक्ष्यसम्मतैः सम्बन्धः । नापि प्रयोजनान्तरं प्रयोजनत्वेन सम्भवति । नापि गङ्गाशब्दस्य तट इव पावनत्वादौ स्खलद्गतित्वं, स्वार्थसमवायित्वात् । इत्थं न लक्षणायाः शङ्काङ्कुरस्याप्यवकाशः ॥ ११ ॥

साहित्यचूडामणिः

सम्बन्धाभावं प्रकटयति — **न चेति** । यदि च लक्षणासमर्पणीयैः पावनत्वादिभिस्तटस्य सम्बन्धः स्यात्, तदायं तटशब्दस्यैवार्थोऽस्तु, कृतं गङ्गाशब्दार्थत्वानुभवव्यसनेनेत्याह — **गङ्गाशब्दार्थस्येति** । फलेनेति जातावेकवचनमिति भावः । किञ्चात्र न शब्दस्य गतिस्खलनमित्युद्भावयितुं न च शब्दः स्खलद्गतिरिति कारिकापुच्छं व्याचष्टे — **नापीति** । स्खलन्ती बाधेन विधुरीक्रियमाणा गतिरवबोधनशक्तिर्यस्य । गङ्गाशब्दो यथा तटं प्रतिपादयितुं लक्षणाया अभावे प्रगल्भो न भवति, न तथा फलं प्रतिपादयितुं स्खलद्गतित्वाभावात् । व्यञ्जनावलम्बिनो गङ्गाशब्दस्य फलविषया प्रतिपादनशक्तिर्न स्खलति यथा तस्यैवाभिधावलम्बिनः स्रोतोविषया । यदाह —

"मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥"

इति । तटमिवेत्यत्रेवशब्दो वैधर्म्यदृष्टान्ते ।

एवमपि प्रयोजनं चेल्लक्ष्यते तत् प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृद् अनवस्था भवेत्।

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते। गङ्गायास्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतिपत्तिश्च प्रयोजनमिति विशिष्टे लक्षणा। तत् किं व्यञ्जनेनेत्यत आह—

---

सम्प्रदायप्रकाशिनी

अथापि चेदभ्युपगम्येत, तदा प्रथमलक्षणाया मूलोच्छेदि दुरन्तं दोषान्तरमापतेदित्याह — **एवमपीति**। प्रकृताप्रतीतिकृदिति[1] मूलक्षयेत्यस्य विवृतिः। प्रकृतलक्षणाया ज्ञप्तिप्रतिबन्धकारिण्यनवस्था प्रसजेत्। उत्पत्तिज्ञप्त्योरन्यतरप्रतिबन्धकत्वाभावे हि नानवस्थादोषः। यथा बीजाङ्कुरादौ।

अथ विशिष्टे[2] लक्षणेति मतं दूषयितुं प्रस्तौति — **ननु पावनत्वादीति**। गङ्गातट इत्यादिना मुख्यपरित्यागस्य नैरर्थक्यं निराकृतम्। इतिर्हेतौ। यत इत्थं प्रयोजनसम्भवः, अतो विशिष्ट एव लक्षणेति।

साहित्यचूडामणिः

ननु यदुक्तं न प्रयोजनमेतस्मिन्निति न तद्युक्तं प्रयोजनान्तराभ्युपगमादित्याशङ्क्याह — **एवमपीति**।

विशिष्टलक्षणायां वन्ध्यो व्यञ्जनप्रयास इत्याशङ्कते— **नन्विति**। पावनत्वादिभिर्धर्मैरपृथग्भूतमेव सत् तटं लक्ष्यते न तु पूर्वं तटादौ लक्षिते पश्चादमीषां लक्षणा। ननु प्रयोजनविशिष्टतया तटादिलक्षणायां पुनरपि केनचिद् भाव्यं प्रयोजनेन लक्षणाङ्गतया तच्च नास्तीति कथं विशिष्टे लक्षणेत्यत्राह — **गङ्गाया इति**। गङ्गायास्तटे घोष इति मुख्यात् प्रयोगाद् गङ्गायां घोष इत्यस्य यद् वैलक्षण्यं तत्प्रतीतिः फलमस्तु।

---

१. 'ती' ग. पाठः. २. 'ष्ट' क. घ. पाठः.

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १२ ॥**

कुत इत्याह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।**

प्रत्यक्षादेर्हि नीलादिर्विषयः । फलं तु प्रकटता संवित्तिर्वा ।

**विशिष्टे लक्षणा नैवं**

व्याख्यातम् ।

---

सम्प्रदायप्रकाशिनी

तदेतन्निराचष्टे — **प्रयोजनेन सहितमिति** । प्रयोजनसहितस्यैव तटादेर्लक्ष्यत्वाभ्युपगमो न युक्त इत्यर्थः ॥ १२ ॥

तत्र हेतूपन्यासः — **ज्ञानस्य विषय इति** ।

**नीलादिरिति** । गुणेन गुणी लक्ष्यते बाह्येन्द्रियगोचरत्वरूपविशेषप्रथनाय, घटादिरित्यर्थः । फलं ज्ञानप्रयोजनम् । प्रकटता संवित्तिर्वेति विकल्पो व्यवतिष्ठते । भाट्टादयो हि प्रकटीभावलक्षणं ज्ञेयधर्मं ज्ञानफलमाहुः । वैशेषिकादयस्तु संवित्तिरूपं ज्ञातृधर्मम् । संवित्तिरनुव्यवसायः । घटज्ञानं जानामीत्यादिज्ञानविषयं ज्ञानमिति यावत् । प्रकटतैवास्तु ज्ञानफलं संवित्तिर्वा, नतु फलविषययोः सर्वथा तादात्म्यमुपपद्यत इति निष्कर्षः ।

उपसंहरति — **विशिष्टे लक्षणेत्यादि** ।

साहित्यचूडामणिः

तावन्मात्रविश्रान्त्या विनानवस्थेति परिहरति — **प्रयोजनेनेति** । न युज्यते प्रमाणेन न साध्यते । ज्ञानस्य हि प्रत्यक्षप्रमुखस्य नीलसुखादिर्गोचरः । प्रयोजनं तु प्राकट्यं संवित्तिर्वा । तद्वल्लक्षणाया अपि तटादिर्विषयः पावनत्वादिकं तु फलमिति कथं विशिष्टे लक्षणा । प्राकट्यं विषयवर्ती धर्मः । संवित्तिस्तु विषयस्फुरणसमनन्तरभाविन्यर्थक्रिया । दर्शनभेदप्रदर्शनाय वाशब्दः ।

निगमयति — **विशिष्ट इति** । एवमुपपादितया युक्त्या ।

**व्याख्यातमिति** । आशङ्काग्रन्थ एव समर्थितत्वात् ।

---

१. 'त्वे', २. 'षणप्र', ३. 'ट जानामीति ज्ञानवि' ख. पाठ. ४. 'नं जातमित्यादिज्ञानविषयज्ञानमिति' क. घ. पाठः. ५. 'न बोध्य' ग. पाठः

विशेषाः स्युस्तु लक्षिते ॥ १३ ॥

तटादौ विशेषाः पावनत्वादयः। ते चाभिधालक्षणातात्पर्येभ्यो व्यापारान्तरेण गम्याः। तच्च व्यञ्जनध्वननादिशब्दवाच्यमवश्यमेषितव्यम् ॥ १३ ॥

---

सम्प्रदायप्रकाशिनी

विशेषाः स्युस्त्विति। लक्ष्यप्रतीतिसमनन्तरमेव प्रयोजनप्रतीतिनियम इत्यर्थः। अत्रैतदुपह्वरं—लक्षणायां हि द्विधा प्रयोजनसम्प्रत्ययः। यदा धर्मिणा धर्म्यन्तरं लक्ष्यते तदा[1] मुख्यार्थधर्माः[2] लक्ष्यगतत्वेन चतुर्थकक्ष्यायां प्रतीताः प्रयोजनं भवेयुः, तदा फलविषययोर्भेदाद् विशिष्टे लक्षणेति शङ्कापि नोदेति। यदा तु मुख्यार्थधर्मेणा[3]मुख्यार्थधर्मो लक्ष्यते, तदा प्रयोजनत्वेन धर्मान्तरं[4] न भवतीति तस्यैव सातिशयत्वप्रतीतिः प्रयोजनम्। तदापि न विशिष्टे लक्षणा, सातिशयत्वप्रतीतेरपि चतुर्थकक्ष्यैकगोचरत्वादिति।

तदेतदभिसन्धायाह—ते चाभिधालक्षणेत्यादि। किं तद् व्यापारान्तरमित्यत आह—तच्च व्यञ्जनध्वननादीति। आदिशब्दात् प्रत्यायनद्योतनादि। अवश्यमिति न्यायस्य गलेपातिकया[5] प्रवृत्तिमनुसन्धत्ते। एषितव्यम् अभ्युपगन्तव्यम् ॥ १३ ॥

साहित्यचूडामणिः

अथ कथं तत्र पावनत्वादिप्रतीतिरित्यत्राह—विशेषा इति। लक्षिते तटादाविति कारिकावृत्त्योरेकवाक्यच्छाययोपादानम्।

परमं प्रकरणार्थमुपसंहरति—ते चेति। समयापेक्षा पदार्थावगम[6]नशक्तिरभिधा। सैव तदन्यथानुपपत्तिसहाया तात्पर्यम्। मुख्यार्थबाधादिसव्यपेक्षा लक्षणा। तच्चेति व्यापारान्तरम्। उक्तशक्तित्रयोपजनितार्थान्तरमूलतत्प्रतिभासपवित्रितप्रतिपत्तृप्रतिभाससहाया पदार्थावबोधनशक्ति[7]र्व्यञ्जनम्। यस्य

---

१. 'दा मुख्यधर्मेणामु' ख. पाठः २., ३. 'ख्यध' ग. पाठः. ४. 'रं संभ', ५. 'पाटिति' ख. पाठः. ६., ७. 'गाहन' क. ख. पाठः.

एवं लक्षणामूल व्यञ्जकत्वमुक्तम्। अभिधामूलं त्वाह—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥ १४॥**

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥**

---

सम्प्रदायप्रकाशिनी

अथाभिधामूलं प्रस्तौति—**एवं लक्षणामूलमिति।**

**अनेकार्थस्येति**। वाचकत्वे अभिधाशक्तौ। **संयोगाद्यैर्नियन्त्रिते** संयोगविप्रयोगादिभिर्नियमिते।

ननु क एते संयोगादयः, यैरनेकार्थस्य सतोऽपि शब्दस्याभिधा प्रतिनियतेऽर्थे नियम्यत इत्यतः संयोगादीनभियुक्तसंवादपुरस्कारेणोपदर्शयति—**संयोगो विप्रयोग** इत्यादिना। अर्थः प्रयोज-

साहित्यचूडामणिः

ध्वननाद्यनेकपर्यायत्वं तदनिच्छयाप्यनुमन्तव्यमिति। ननु 'स्याद्वाचक' इत्यत्र त्रय एव व्यापारा उद्दिष्टाः, अत्र तु तात्पर्यमित्यपि पर्यगण्यतेति चेत्। तन्न। 'तात्पर्यार्थोऽपि केषुचिदि'ति सूचितत्वात्॥ १३॥

अभिहितमभिधास्यमानं च प्रमेयं प्रकटयति—**एवमिति। लक्षणामूलमिति**। यन्मूलोऽविवक्षितवाच्यस्कन्धः प्रपञ्चयिष्यते[1]। **अभिधामूलमिति**। विवक्षितान्यपरवाच्यस्कन्धप्रभवभूतम्।

**अनेकार्थस्य** बह्वभिधेयस्य हर्यादेः शब्दस्याभिधायकत्वे परिगणयिष्यमाणैः संयोगादिभिः शृङ्खलितेऽपि भूयस्तटाकसलिलोपक्षेहन्यायादनभिधेयस्यार्थान्तरस्य या धीः संवित् तां करोति तादृशी व्यापृतिर्व्यञ्जनमेव नान्यत्।

संयोगाद्यैरित्युक्तं[2] ग्रन्थान्तरेण पूरयति—**संयोग** इति। शब्दार्थस्यानेकार्थस्य शब्दस्य योऽर्थः तस्यानवच्छेदे नियन्त्रणाभावे प्रसक्ते विशेषस्मृतिहेतवः अवच्छेदप्रतीतिनिबन्धनानि। संयोगः सम्बन्धः, विप्रयोगो वि-

---

१. "पञ्चयति' ग. पाठः. २. 'द्यैर्नि' घ. पाठः.

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥"

इत्युक्तदिशा सशङ्खचक्रो हरिः अशङ्खचक्रो हरिरित्यच्युते । रामलक्ष्मणाविति दाशरथौ । रामार्जुनगतिस्तयोरिति भार्ग-

सम्प्रदायप्रकाशिनी

नम् । लिङ्गं चिह्नम् । व्यक्तिः पुंल्लिङ्गादीति । इत्युक्तदिशेति संवाद-रूपयोः श्लोकयोर्मूलकारिकात्वभ्रमं निरास्थत् । सशङ्खचक्र इति अनेकार्थस्यापि हरिशब्दस्य विष्णावभिधानियमनं संयोगेन दर्शि-तम्, अशङ्खचक्र इति वियोगेनापि तत्रैव प्रतिषेधस्य प्रसक्तिपूर्व-कत्वात् । नह्यन्यत्र शङ्खादिप्रसक्तिः प्रसिद्धा । रामलक्ष्मणाविति लक्ष्मणसाहचर्येण । एवं रामार्जुनेत्यादौ विरोधितादयो योजनीयाः।

साहित्यचूडामणिः

श्लेषः, साहचर्यं सान्निध्यं, विरोधिता वध्यघातकभावादिः, अर्थः प्रयोजनं, प्रकरणं प्रस्तावः, लिङ्गं वस्तुचिह्नम्, अन्यशब्दसन्निधिः पदान्तरसाचिव्यं, सामर्थ्यं[1] युक्तिः, औचिती औचित्यं, देशोऽद्रिवनराष्ट्रादिः, कालो नक्तंदिन-र्तवः, व्यक्तिः स्त्रीपुंनपुंसकादिकं लिङ्गं, स्वर उदात्तादिः ।

क्रमादुदाहरति — सशङ्खेति । हरिशब्द इन्द्राद्यनेकाभिधेयः, स श-ङ्खचक्रसम्बन्धरूपया नियन्त्रणया केवलमच्युते पुरुषोत्तमे वर्तते । अशङ्खेति । शङ्खचक्रविप्रयोगेणापि हरिशब्दस्याच्युते नियन्त्रणा । विप्रयोगो हि संयोगस-मानयोगक्षेमः तत्पूर्वकत्वनैयत्यात् । रामशब्दोऽपि बलभद्राद्यनेकार्थः । स सौ-मित्रिसाहचर्याद् दाशरथौ मैथिलीपतौ वर्तते । रामार्जुनशब्दयोरनेकार्थयोर्मि-थो विरोधाद् भार्गवे रैणुकेये कार्तवीर्ये हैहयाधिपतौ च वृत्तिः । तयोरिति । विरुद्धतया प्रक्रान्तयोः कयोश्चित् । एषां विप्रयोगाद्यन्यतरसाह[2]चर्यमप-रिहार्यं, प्रधानेन व्यपदेशः । स्थाणुशब्दो दारुविशेषस्य शङ्करस्य च

१. 'सामर्थ्यम्' क. ख. पाठः. २. 'द्वित्राद्य', ३. 'ङ्कर्य' ग. पाठः.

वकार्तवीर्ययोः । स्थाणुं भज भवच्छिदे इति हरे । सर्वं जानाति देव इति युष्मदर्थे । कुपितो मकरध्वज इति कामे । देवस्य पुरारातेरिति शम्भौ । मधुना मत्तः कोकिल इति वसन्ते । पातु वो दयितामुखमिति साम्मुख्ये । भात्यत्र परमेश्वर इति राजधानीरूपाद् देशाद् राजनि । चित्रभानुर्विभातीति दिने रवौ, रात्रौ वह्नौ । मित्रं भातीति सुहृदि, मित्रो

सम्प्रदायप्रकाशिनी

भवच्छिदे इति चतुर्थ्या अर्थशब्दस्य प्रयोजनार्थत्वं द्योतितम् । युष्मदर्थे इति प्राकरणिकत्वात् । जानातीति, प्रथमपुरुषनिर्देशोऽपि तत्रैव वर्तत इत्यर्थः । कुपित इति । कोपचिह्नेन मकरध्वजशब्दो मन्मथवृत्तिः, न पुनरम्बुराशिरित्यर्थः । पुरारातिशब्दसन्निधेर्देवशब्दः शम्भौ । कोकिलमदोत्पादनसामर्थ्याद् मधुर्वसन्तः । मुखमित्यौचित्यात् सांमुख्यं, न तु वक्त्रादि । मित्रमिति 'लुपि युक्तवद् व्यक्ति-

साहित्यचूडामणिः

वाचकः । स भवस्य संसारस्य या छित् छेदः तस्यै इति प्रयोजनोपन्यासेन शम्भौ पर्यवस्यति । सर्वमिति । देवपदमिन्द्राद्यनेकाभिधेयं, तदिह चक्रवर्तिनं प्रति कश्चिदाचष्ट इति प्रकरणाद् युष्मदर्थे विश्राम्यति । मकरध्वजशब्दो मन्मथे समुद्रे च वर्तते । स चैतन्याविनाभूतात् कोपरूपाल्लिङ्गात् कन्दर्प एव प्रसर्पति । देवस्येति । उक्तयुक्त्या नानार्थस्य देवशब्दस्य पुरारातेरित्यन्यशब्दसान्निध्यादीश्वरे पर्यवसानम् । मधुशब्दो माक्षिकं मासविशेषं चाभिधत्ते । तत्र कोकिलमदजननसामर्थ्यान्मासविशेषस्यैव न क्षौद्रस्येति तस्य वसन्ते प्रतिष्ठा । अवयवावयविनोरभेदविवक्षायां मधोर्वसन्तत्वम् । पात्विति । रक्षणं सुखसमर्पणदुःखनिबर्हणादिद्वारानेकार्थम् । तत्र दयितावदनस्य पूर्वत्रैव तात्पर्यमिति तत्साम्मुख्येऽवस्थानम् । परमेश्वरशब्दश्चन्द्रशेखरं नरेन्द्रं चाभिधत्ते । तत्रात्रेति प्रत्यक्षं प्रतिपाद्यमानान्नगरीलक्षणाद् देशात् स राजनि वर्तते । चित्रभानु-

१. 'केतुश', २. 'रारिश' ग. पाठः.

भातीति रवौ। इन्द्रशत्रुरित्यादौ वेद इव काव्ये स्वरो न विशेषप्रतीतिकृत्। आदिग्रहणाद्

"एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिपत्तेहिं।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं॥"

सम्प्रदायप्रकाशिनी

वचने' इत्यादाविव व्यक्तिशब्दस्य पुमादिलिङ्गपरतां दर्शिता[1]। इन्द्रशत्रुरिति। अत्र 'समासस्य[2]' इत्यन्तोदात्तत्वे षष्ठीतत्पुरुषः, 'बहुव्रीहौ (प्रकृत्या) पूर्वपदम्' इति तु पूर्वपदान्तोदात्तत्वे बहुव्रीहिरिति स्वरभेदेन समासभेदव्यवस्थानादर्थव्यवस्था।

एद्दहमेत्तेति।
एतावन्मात्रस्तनी एतावन्मात्राभ्यामक्षिपत्राभ्याम्।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः॥

साहित्यचूडामणिः

शब्दस्य सूर्ये वह्नौ च सङ्केतः। तत्र यदि दिवसः कालः तदा सूर्ये, यदि च रात्रिः तदा वह्नौ तस्य प्रवृत्तिः। अविवक्षितलिङ्गकस्य मित्रशब्दस्य सुहृदादित्ययोः समयः। तस्य नपुंसकत्वे सुहृदि, पुंस्त्वे रवौ तात्पर्यम्। एवं करुण इति रसः करुणेत्यनुक्रोश इत्यादि मन्तव्यम्। इन्द्रेति। शत्रुशब्दो हि शातयतेरुपजायते। इन्द्रः शत्रुः शातयिता यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरात् शातयितृत्वमिन्द्रस्य, इन्द्रस्य शत्रुरिति तत्पुरुषे शातयितृत्वं वृत्रस्येति शब्दैक्यमर्थभेदश्च। तत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरादिन्द्रपदादेरिकारस्योदात्तत्वं, तत्पुरुषे समासान्तोदात्ततया शत्रुशब्दान्तर्वर्तिन उकारस्येति। एवं च स्वरनिर्णयादर्थनिर्णयः। यदाहुः—

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥"

इति। नन्वेवं भ्रातृव्यादिप्रयोगे स्वरानवसायान्न विवक्षितार्थोपलम्भ इत्यत्राह—वेद इवेति। काव्ये स्वरो नात्यन्तमादरणीयः, मात्रया श्लेषादावादरणीयश्च।

१. 'ता। इ' ग. पाठः. २. 'स्य च इ' ख. पाठः.

इत्यादावभिनयादयः । इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत् क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा नियमनात् तस्याः, न च लक्षणा मुख्यार्थबाधाद्यभावाद्, अपित्वञ्जनं व्यञ्जनमेव व्यापारः। यथा—

---

सम्प्रदायप्रकाशिनी

अत्र एतावन्मात्रशब्दानां नानापरिमाणवाचकत्वेऽपि मुकुलीकरणप्रसृतीकरणादिना हस्ताभिनयेन स्तननयनादिनियतपरिमाणवचनत्वम् । ननु संयोगादिभिरस्त्वभिधानियमः, प्रकृते किमायातमित्यत आह— इत्थं संयोगादिभिरिति ।

साहित्यचूडामणिः,

एद्दहेति ।

एतावन्मात्रस्तनी एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।

एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥

इति । अत्रैतावन्मात्रशब्दस्य तत्र तत्र स्तनादावभिनयभेदादर्थभेदः। अभिनयादय इत्यादिपदेन पाठधर्मस्वीकारः । यथा—

यस्यारिजातं नृपतेरपश्यदवलम्बनम् ।

ययौ निर्झरसम्भोगैरपः श्यदवलं वनम् ॥

अत्रावलम्बनशब्दे दन्त्योष्ठ्यकेवलोष्ठ्ययोः पौर्वापर्यादुच्चारणे पदमेकमास्पदार्थं, विपर्यये पदद्वयम् । अबलं परिकरशून्यम् । अरिजातमरातिवर्गः । वनं काननं ययौ । किंभूतम्, अवलम्बनमाश्रयम् अपश्यद् अप्रेक्षमाणम् । पुनश्च किंभूतं, निर्झरसम्भोगैः अपः सलिलानि श्यत् कृशीकुर्वदिति तात्पर्यात् । अथानेकार्थेत्यादिकारिकाव्याख्यां निर्वहति— इत्थमिति । क्वचिन्महाकविप्रयोगेऽर्थान्तरस्यानभिधेयभूतस्य यत् प्रकाशनं तत्र व्यञ्जनशरणतैव । तत्र शब्दस्य न त्वभिधा लक्षणा वा। अभिधा लक्षणा वा भवत्विति पूर्ववत् प्रतिपत्तिसौकर्यार्थमाशङ्क्याह— नाभिधेति। अपित्विति । पारिशेष्याद् व्यञ्जनमेव। अञ्जनं व्यञ्जनमित्युपसर्गस्य कारिकायां नात्यन्तानिर्बन्ध इति यावत् ।

---

१. 'तुच्छीकु' ग० पाठः

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥ १४ ॥

---

सम्प्रदायप्रकाशिनी

भद्रात्मन इति । भद्रात्मा कल्याणप्रकृतिः भद्रजातिश्च[1] । वंशः कुलं पृष्ठास्थिदण्डश्च । शिलीमुखाः शरा द्विरेफाश्च । गतिरवगतिः पाद-परिस्पन्दश्च । परवारणः परेषां वारयिता प्रकृष्टो[2] गजश्च । दानं वित-रणं मदश्च । करो हस्तः[3] स्थूलहस्तश्च । अत्र पदानामभिधा प्राकरणिके राजनि नियम्यते । प्रतीयते चार्थान्तरं गजरूपम् । न तत्राभिधा प्रकरणेन[4] प्राकरणिके नियमनात् । नापि लक्षणा हेत्वभावात् । अतो व्यञ्जनमेव व्यापार इत्यभिधामूलध्वनिसिद्धिः ॥ १४ ॥

साहित्यचूडामणिः

भद्रेति । भव्यस्वभावस्य व्यूढोरस्कत्वादिना दुरधिरोहा दुर्धर्षा तनु-र्यस्य । विशाला बहुसन्ताना वंशोन्नतिरन्वयमहत्ता यस्य । कृतः शिलीमुखानां शराणां संग्रहः सञ्चयो येन । असङ्कीर्णा वर्णाश्रमादिमर्यादा यस्य । परवारण-स्य वैरिनिवारकस्य । दानाम्बु विश्राणनोदकं तेन सुभगः करः पाणिर्यस्य इति वाच्योऽर्थः । अत्रैव प्रकरणादिप्राबल्यादभिधायाः शृङ्खलनम् । यत् पुनः परवारणत्वमुत्कृष्टकुञ्जरता तदानुगुण्येन मन्दमृगव्यतिरिक्तजातित्वं कृच्छ्रा-क्रमणीयवर्ष्मत्वं विस्तीर्णपृष्ठास्थिसमुच्छ्रायता विरचितचञ्चरीकस्वीकारवत्त्वं विलक्षणगतित्वं दानाम्बु मदजलं करश्च शुण्डेत्यर्थान्तरं तत्र व्यञ्जनादृते नान्यस्य व्यापारस्यौचित्यम् । अतः स्थितमेतद् यदभिधालक्षणोभयमूला का-चित् प्रसिद्धप्रस्थानातिक्रान्ता शक्तिरस्ति शब्दस्येति, व्यञ्जकस्य शब्दस्य विवक्षियिषितत्वात्(?) ॥ १४ ॥

---

१. 'तिः प' ख. पाठः. २. 'ष्टो वारणश्च' क. घ. पाठः. ३. 'स्तः राजदेयश्च' क. पाठः. ४. 'न नि' ख. ग. पाठः

**तद्युक्तो व्यञ्जकः शब्दः**

तद्युक्तो व्यञ्जनयुक्तः।

**यत् सोऽर्थान्तरयुक् तथा।**
**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥ १५ ॥**

---

सम्प्रदायप्रकाशिनी

अथ वृत्तिमति[1] योजयितुमाह — **तद्युक्त** इति। अनुषङ्गसिद्धस्यापि शब्दशब्दस्योपादानं प्रतियोगित्वेनार्थस्यापि व्यञ्जकत्व[2]मुपक्षेप्तुम्।

अथ येन नयेन शब्दो व्यञ्जकस्तेनैव नयेनार्थोऽपीत्याह— **यत् सोऽर्थान्तरयुगिति**। यथा ह्यथान्तरयोगित्वाच्छब्दो व्यञ्जकस्तथार्थोऽपि तद्योगित्वाद् व्यञ्जक इत्यर्थः। ननूभयस्यापि व्यञ्जकत्वे शब्दशक्तिमूलोऽयमर्थशक्तिमूलोऽयमिति कथं व्यवस्थेत्यत आह— **तत्र सहकारितया मत** इति। यतः शब्दादर्थाद्वा प्रामुख्येन व्यञ्जनव्यापारप्रतीतिः ध्वनिस्तन्मूल इति व्यपदिश्यते। प्रधानेन

साहित्यचूडामणिः

प्रकृतमुपसंहरति — **तद्युक्त** इति।

ननु शब्दव्यञ्जकत्वे यस्तस्याभिधेयोऽर्थः स किमजागलस्तनन्यायेनास्ते। नेत्याह — **यदिति**। **स** इति। व्यञ्जकः शब्दः। **अर्थान्तरयुक्** अभिधेयेन लक्ष्येण वा यथोचितेन केनचिदर्थेन युक्तो भूत्वा तथा व्यञ्जको भवति। अतो हेतोरर्थोऽपि तत्र व्यञ्जने सहायतयाभ्युपगतः। ततश्च प्रधानकारणतया परिगृहीतस्य शब्दस्यैव सहकारितया तदर्थस्यापि व्यञ्जकत्वं विहितमिति सिद्धम् ॥ १५ ॥

---

१ 'भि' ग. पाठः. २. 'ता' ख. ग. पाठः.

तथेति व्यञ्जकः ॥ १५ ॥

इति काव्यप्रकाशे शब्दनिर्णयो नाम
द्वितीय उल्लासः ।

---

सम्प्रदायप्रकाशिनी

हि व्यपदेशा भवन्ति । तदितरत् तु तत्र सहकारीति उपपन्नैव व्यवस्थेति भावः ॥ १८ ॥

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-
पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्त्तिध्वनिप्रस्थानपरमाचार्य-
काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-
योगीश्वरश्रीमत्त्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकवि-
श्रीविद्याचक्रवर्त्तिकृतौ सम्प्रदायप्रकाशिन्यां
काव्यप्रकाशबृहट्टीकायां
द्वितीय उल्लासः ।

---

साहित्यचूडामणिः

प्रयोगयोग्ये विषये प्रयोज्यं शक्तित्रयं यः क्षमते विवेक्तुम् ।
साहित्यसाम्राज्यधुरन्धरः सन् निष्कण्टकां सम्पदमश्नुते सः ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां
द्वितीय उल्लासः ।

---

## अथ तृतीय उल्लासः ।

**अर्थाः प्रोक्ताः पुरा तेषाम्**

अर्था वाच्यलक्ष्यव्यङ्ग्याः । तेषां वाचकलाक्षणिकव्यञ्जकानाम् ।

**अर्थव्यञ्जकतोच्यते ।**

कीदृशीत्याह —

---

सम्प्रदायप्रकाशिनी

### अथ तृतीय उल्लासः ।

अथोल्लासयोः सङ्गतिमासूत्रयन्नर्थव्यञ्जनस्य विवेचनमवसरागतमाह सूत्रकारः — **अर्थाः प्रोक्ताः पुरेत्यादि** । पुरा वाचकादिशब्दनिरूपणावसरे । वाचकादयो हि शब्दाः साक्षादेव निरूपिताः, वाच्यादयोऽर्थाः पुनस्तन्निरूपणप्रसङ्गात् । तस्मादनभिव्यक्तमर्थस्वरूपविवेचनमनुस्मारयितुं सूत्रेणैव सङ्गतिकथनम् ।

यद्यर्थाः प्रोक्ताः, तर्हि कस्येदानीमवसर इत्यत आह— **अर्थव्यञ्जकतोच्यत** इति । वाच्यलक्ष्यव्यङ्ग्याना व्यञ्जकता विविच्यते ।

तां प्रस्तोतुमाह — **कीदृशीत्याहेति** ।

साहित्यचूडामणिः

### अथ तृतीय उल्लासः ।

उल्लिखामि महाकाव्यरत्नकोशमहाखनिम् ।
अव्यक्तलोचनालोकैरनालोच्यां सरस्वतीम् ॥

उल्लाससङ्गतिं कारिकाकारः स्वयमेवोद्घाटयति —**अर्था** इति । पुरेति । अतीतोल्लासे । तेषां वाचकादीनाम् ।

**अर्थव्यञ्जकतोच्यते** इदानीमिति शेषः । इदमत्राकूतं — द्वितीय उल्लासे वाचकलाक्षणिकोभयपर्यालोचनपूर्वकं शब्दस्य व्यञ्जकत्वं निरटङ्कि, इदानीमर्थस्यापि समर्थ्यत इति ।

तदनुकूलां सहायसंपदं व्युत्पादयति—**कीदृशीति** ।

---

१. 'नत्वचि' ग. पाठः. २. 'ह वृत्तिकारः अ' क. घ. पाठः.

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥ १ ॥
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥ २ ॥

बोद्धव्यः प्रतिपाद्यः । काकुः ध्वनेर्विकारः । प्रस्तावः प्रकरणम् । अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः । क्रमेणोदाहरणम्—

अइपिउलं जलकुम्भं घेत्तूण समागदह्मि सहि! तुरिअम् ।
समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥

---

सम्प्रदायप्रकाशिनी

वक्तृबोद्धव्येति । बोद्धव्यपदेन बोधनीयार्थभ्रमो मा भूदित्याह — बोद्धव्यः प्रतिपाद्य इति । प्रतिपत्तेत्यर्थः ।

अइपिउलमिति ।

अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि! त्वरितम् ।
श्रमस्वेदसलिलनिश्श्वासनिस्सहा विश्राम्यामि क्षणम् ॥

अतिपृथुलमिति दुर्वहता । जलकुम्भमिति पूर्णत्वाद् दुर्वहतरत्वम् ।

साहित्यचूडामणिः

प्रतिभाजुषामित्यनेन पामरप्रभृतयोऽपि वाच्यमर्थमनायासादवबुध्यन्ते, व्यङ्ग्यसंवेदनवैदग्ध्ये तु कतिचिदेवाधिकारिण इति ध्वन्यते । व्यक्तिरेव, शब्दवृत्त्यन्तरशङ्काया एवानौचित्यात् । यद्वा नोत्पत्तिरित्यवधारणम् । बोद्धव्य इत्यन्तर्भावितण्यर्थः । 'कक लौल्ये' इति धातोः काकुः, प्रकृतादर्थादर्थान्तरे शब्दस्य चलत्स्वभावत्वात् । यद्वा ईषदर्थे कुशब्दः तस्य कादेशः कुर्भूमिः हृदयस्थवस्तुप्रतीतेरीषद्भूमिः काकुरिति यावत् ।

अइपिउलमिति ।

अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि! त्वरितम् ।
श्रमस्वेदसलिलनिःश्वासनिस्सहा विश्राम्यामि क्षणम् ॥

अत्र चौर्यरतगोपनं गम्यते[1] ।

ओण्णिद्दं दोब्बल्लं चिन्ता अळसत्तणं सणीससिअं ।
मह मन्दभाइणीए केरअ सहि! तुह वि अहह परिभवइ ॥

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।

---

सम्प्रदायप्रकाशिनी

गृहीत्वा समागतास्मीति सहायविरहः । त्वरितमिति श्रमाविर्भावनिदानोपन्यासः, गृहाद् बहिः क्षणमात्रमपि कालक्षेपासहत्वं च । अत्र वक्तृवैशिष्ट्याच्चौर्यरतगोपनावगतिः[2] ।

ओण्णिद्दमिति ।
औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिश्श्वसितम् ।
मम मन्दभागिन्याः कृते सखि! त्वामप्यहह परिभवति ॥

अत्रौन्निद्र्यादयो विशेषाः बोद्धव्यायां दूत्यामधिक्षेपोक्त्या प्रतीताः नायकोपभोगं प्रत्याययन्ति ।

साहित्यचूडामणिः

इत्युपपतिना सद्योभुक्तमुक्तायाः कस्याश्चिदुक्तिः ।

चौर्यप्रधानं रतं चौर्यरतं यत् सरित्तीरलताकुञ्जादावेव सिध्यति तस्य गोपनं प्रच्छादनं गम्यते । अत्र वक्तृजनवैशिष्ट्यादर्थस्यार्थान्तरव्यञ्जकत्वम् ।

ओण्णिद्दमिति ।

औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि! तवाप्यहह परिभवति ॥

इत्येककामुकाभिलाषिणीं दूतीं प्रति कस्याश्चिदुक्तिः । तव परिभवतीति न माषाणामश्नीयादितिवद्, 'धातुसंबन्धे प्रत्ययाः' इत्युक्तत्वात् ।

तत्कामुकेति । या खल्वेवमाचष्टे तत्कामुकोपभोगो व्यज्यते ।

---

१., २. 'चौर्य्य' ख. पाठः.

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥

अत्र मयि न योग्यः खेदः कर्तुं, कुरुषु तु योग्य इति काक्वा प्रकाश्यते। नच वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्, प्रश्नमात्रेणापि काकोर्विश्रान्तेः।

---

सम्प्रदायप्रकाशिनी

**तथाभूतामिति**। भीमसेनस्योक्तिरेषा। गुरुर्युधिष्ठिरः।

अत्र काकुवैशिष्ट्याद् यादृग् व्यङ्ग्यं तदुपदर्शयति — **अत्र मयीति**। नन्विह काकुमनाश्रित्य वाच्यसमन्वय एव न घटत इति गुणीभूतव्यङ्ग्यत्वं युक्तम्। वक्ष्यति हि 'वाच्यसिद्ध्यङ्गमस्फुटमि'ति। तत् कथं ध्वनेरिदमुदाहरणमित्यत आह—**नच वाच्यसिद्धीति**। तत्र हेतुः—**प्रश्नमात्रेणापीति**। यदि वाच्यसिद्धिमात्रे काकुरङ्गं

साहित्यचूडामणिः

**तथाभूतामिति**। केशग्रहणादिक्लेशयोगिनीम्। वल्कलधरैरित्यत्रास्माभिरित्यध्याहार्यम्। इत्थं मयि खिन्नेऽपीत्यध्याहारः। मयि कुरुष्विति सप्तमीद्वयं काकुस्थानम्।

ननु काकुव्यतिरेके विवक्षितं वाच्यमेव न सिध्यति। काकुर्हि शब्दस्यैव कश्चन धर्म इति तया स्पृष्टं शब्देनैवोक्तं स्यात्। वाच्यसामर्थ्याक्षिप्तत्वादर्थस्य व्यङ्ग्यत्वं वाचकशब्दस्पृष्टत्वात्तु गुणीभाव इत्याशङ्क्याह — **नचेति**। **प्रश्नमात्रेणापीति**। नखलु वाक्यार्थघटनापर्यन्तमत्र काकुरुद्दीप्यते। केवलं कुशस्थलं वृकस्थलमित्यादिप्रतिसन्धिप्रस्ताविनमवरजमुद्दिश्य सस्नेहो-

---

१ 'नयति' ख. पाठः. २ 'त्याह' ग घ. पाठः.

तइआ मह गण्डत्थळणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एह्णिं सच्चेअ अहं ते अ कवोळा ण सा दिट्ठी ॥

अत्र मत्सखीं कपोले प्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत् । चलितायां तु तस्यामन्यैव जातेत्यहो[1] ते प्रच्छन्न-

---

सम्प्रदायप्रकाशिनी

स्यात्, तदा कच्चिन्मयि खेदं भजतीत्यादिवत् प्रश्नमात्रेणार्थविश्रान्तिः प्रसज्येत । नच तथा विश्राम्यतीति ध्वनिरेवायामिति भावः ।

**तइआ महेति ।**

**तदा मम गण्डस्थलनिमितां दृष्टिं नानैषीरन्यतः ।**
**इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥**

अत्र तदान्या दृष्टिः इदानीमितरेत्येवंरूपाद् वाक्यवैशिष्ट्यात् । व्यञ्जकत्वं दर्शयति — **अत्र मत्सखीमित्यादि** ।

साहित्यचूडामणिः

पालम्भहसितगर्भायाः काकोः कथमेवंविधा आर्ययुधिष्ठिरस्य राजकार्यचिन्तेति प्रश्नमात्रेणापि पर्यवसानात् । एतेन वाच्यसिद्ध्यङ्गविशेष एव काक्वाक्षिप्तं, वैचित्र्यान्तराय पृथक्कारो वक्ष्यते इति व्याख्यातम् । दण्डापूपिकया काक्वाक्षिप्ततयापि न गुणीभूतव्यङ्ग्यत्वमिति ।

तइआ इति ।

तदा मम गण्डस्थलनिमितां दृष्टिं न नयस्यन्यतः ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥

इति प्रत्यक्षदृष्टकपोलप्रतिबिम्बावलोकनव्यलीकं कान्तमुद्दिश्य कस्याश्चिदुक्तिः ।

अविचित्रस्य वाच्यस्य सर्ववाक्यसाधारण्याद् व्यञ्जनसहकारोचितं वैचित्र्यमासूत्रयति—अत्रेति । अन्यैव सद्भावस्नेहादिधर्मिण्यभूत् । अन्यैव

---

१. 'हो प्र' ख. पाठः

कामुकत्वमिति व्यज्यते ।

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन् सुरतसुहृदस्तान्वि ! ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

---

सम्प्रदायप्रकाशिनी

उद्देशोऽयमिति । शोभातिशायी शोभयोद्देशान्तरातिशयनशीलः । सुरतसुहृदस्तदुद्दीपकत्वात् । अकाण्डकोपत्वकथनेनात्मनो रिरंसावैवश्यं ध्वन्यते । अत्रैवंविधवाच्यवैशिष्ट्यं व्यञ्जनोत्थापकम् ।

साहित्यचूडामणिः

दाक्षिण्यादिना ताटस्थ्यशालिनी जाता ।

उद्देश इति । कुञ्जोत्कर्षेषु अङ्कुरितो निःशङ्कमुत्पन्नो रमणीनां विभ्रमो गमनविडम्बनादिविलासो यत्र । यद्यपि 'यश्चाप्सरोविभ्रममण्डनानाम्' इतिवद्

"विभ्रमस्त्वरया काले भूषास्थानविपर्ययः"

इति परिभाषा, तथापि कविभिः शृङ्गारचेष्टामात्रेऽपि विभ्रमशब्दः प्रयुज्यते । किञ्चेत्यनेन वाक्यान्तरत्वमुत्तरार्धस्य स्पष्टं प्रकाश्यते यद्वैशिष्ट्यात् संभोगार्थं प्रविशेति व्यङ्ग्यमुपपद्यते ।

---

१. 'त्वं तवेति', २. 'हरिणी' ख. पाठः. ३. 'कम् । पणो', ४. 'त्वद' ग. पाठः.

णोल्लेइ अणोल्लिळअमणा अत्ता मं घरभरम्मि सअळम्मि ।
खणमेत्तं जइ संझाए होइ ण व होइ वीसामो ॥

अत्र सन्ध्या सङ्केतकाल इति तटस्थं[2] प्रति कयाचिद् द्योत्यते ।

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमत्तेण ।
एमेअ किन्ति चिट्ठसि ता सहि! सज्जेसु[3] करणिज्जम् ॥

---

सम्प्रदायप्रकाशिनी

णोल्लेइ इति ।

प्रेरयत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां(केवलं?) भवति न वा भवति विश्रमः ॥

अत्र निभृतकामुकसन्निधिवैशिष्ट्यात् ।

सुव्वइ इति ।

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत् सखि! सज्जय करणीयम् ॥

साहित्यचूडामणिः

णोल्लेईति ।

नोदयत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे स. ले ।
क्षणमात्रं यदि सन्ध्यायां (केवलं?)भवति न वा भवति विश्रमः ॥

इति । शुष्कहृदयायाः श्वश्र्वाः प्रभावान्मम गृहकार्याद् विरतिर्भवति वा न वेति सन्देहः । यदि च दैवाद् भवति, केवलं सन्ध्यायां, तत्रापि क्षणमात्रमिति तटस्थमन्यं सन्निहितं प्रति कयाचिच्चलितचारित्रया प्रकाश्यते ।

सुव्वइ इति ।

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तस्मात् सखि! सज्जय करणीयम् ॥

इति ।

---

१. 'ळ्ळम', २. 'कामुकं प्र' ख. पाठः. ३. 'अ' क. पाठः

अत्रोपपतिं प्रत्यभिसर्तुं[1] प्रस्तुता न युक्तमिति कयाचिन्निवार्यते ।

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः! ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वया[2] विसर्ज्य इत्याश्वस्तां प्रति कयाचिन्निवेद्यते[3] ।

गुरुअणपरवस! पिअ! किं भणामि तुह मन्दभाइणी खु अहम्।
अज्ज पवासं वच्चसि वच्च सअं चेअ मुणासि करणिज्जम् ॥

सम्प्रदायप्रकाशिनी

अत्र पतिसमागमप्रस्तावान्निभृतकामुकाभिसरणनिषेधव्यक्तिः ।

अन्यत्र यूयमिति । अस्मीत्यहमर्थेऽव्ययम् । अत्र न सखीजननिष्कासनमात्रम्, अपितु देशवैशिष्ट्यादाश्वस्तां सखीं प्रत्यभिमतार्थप्रार्थनमपि व्यज्यते, सहृदयप्रतीतिविश्रान्तेस्तदवधित्वात् । यदि सखीव्यावर्तनमात्रमेवेत्युच्यते, तदा गुणीभूतव्यङ्ग्यत्वमगूढतया प्रसज्येत ।

गुरुअणेति ।

गुरुजनपरवश! प्रिय! किं भणामि त्वां मन्दभागिनी खल्वहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥

साहित्यचूडामणिः

अभिसर्तुं प्रस्तुतेत्यनेन प्रकरणवैशिष्ट्यं प्रकटयति ।

अन्यत्रेति । अस्मीत्यहमर्थे विभक्तिप्रतिरूपको निपातः ।

देशस्य विविक्तत्वं व्यञ्जकभागः । प्रच्छन्नकामुकस्य विसर्जनीयत्वं व्यङ्ग्यांशः ।

गुरुअणेति ।

गुरुजनपरवश! प्रिय! किं भणामि तव मन्दभागिनी खल्वहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥

१. 'ति निवा' इति मूलकोशपाठः. २. 'र्य विसृज्य इ' क. पाठः. ३. 'चिद्बोध्यते' ख. पाठः.

अत्राद्य मधुसमये यदि व्रजासि तदहं तावद् न भवामि, तव तु[1] न जानामि गतिमिति व्यज्यते । आदिग्रहणाच्चेष्टादेः । तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासा[2]दितम् ।
आनीतं पुरतः शिरोंशुकमधः क्षिप्ते चले लोचने
वाचस्तच्च निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥

सम्प्रदायप्रकाशिनी

अत्राद्येति कालवैशिष्ट्यात् ।

द्वारोपान्तेति । निरन्तरे अवकाशमावृत्य स्थिते । प्रोल्लास्य प्रसार्य । परस्परसमासक्तं मिथः समाश्लिष्टम् । अनेन स्पृष्टकमालिङ्गनमुक्तम् ।

साहित्यचूडामणि.

इति । प्रवासोऽत्र लक्षणया गन्तव्यो देशः ।

अद्येति कालनिर्देशको व्यञ्जकः । न भवामीति मरणमात्रशरणता प्रकाश्यते, यतस्तव गतिं प्रवासं न जानामीति । आदिग्रहणसंग्राह्या चेष्टेत्याचष्टे — आदीति ।

द्वारोपान्ते नैरन्तर्यं भवनप्रवेशौन्मुख्यम् । पुरत. ललाटे । अधः चरणमूले । तच्चेति । यत् स्वरससल्लाँपरूपम् ।

आकूतविशेषो विलक्षण आशयः । चेष्टादेरित्यादिपदेन निर्विकारत्वस्वीकारः । यथा —

*दिट्ठाए जं ण दिट्ठो सरळसहावाए जं अणाळत्तो ।
उवआरो जं ण कओ तं चिअ काळिअं छइल्लेहि ॥

१. 'तु गतिं न जानामीति द्योत्यते ।', २ 'पा' ख. पाठः.

*दृष्टया यन्न दृष्टः सरलस्वभावया यदनालपितः ।
उपचारो यन्न कृतस्तदेव कलितं छइल्लेहि(?) ॥

अत्र चेष्टया प्रच्छन्नकान्त[1]विषय आकूतविशेषो ध्वन्यते। निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया पुनःपुनरुदाह्रियते। वक्त्रादीनां मिथः संयोगे द्विकादिभेदे अनेन[2] क्रमेण

सम्प्रदायप्रकाशिनी

ननु शब्दार्थयोर्व्यञ्जकत्वमुदाहृतं, पौनःपुन्येनोदाहरिष्यते च, क उपयोगोऽस्य चर्वितचर्वणस्येत्यत आह — निराकाङ्क्षेत्यादि। यावदाकाङ्क्षोपरतिः प्रतिपत्तृप्रतीतौ तावदुदाह्रियत इत्यर्थः। ननु नानाप्रकरणतयोदाहरणे क उपयोग इत्यत आह — प्राप्तावसरतयेति। यत्रावसरे यस्याकाङ्क्षा, तत्र तदित्यर्थः। एवं शुद्धमर्थध्वनिप्रकारं विविच्य यथा सङ्करादिभेदास्तथोपदेष्टुमाह — वक्त्रादीनामित्यादि। वक्तृबोद्धव्यादीनामर्थानां द्विशस्त्रिशश्च मिथः संयोगे द्विकादिभेदः। अनेन क्रमेणेति। यथैकैकवैशिष्ट्याद् व्यञ्ज-

साहित्यचूडामणिः

इति। ननु

"सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते"

इत्यत्र वाच्यादीनामर्थान्तरव्यञ्जनसामर्थ्यं समर्थितमुदाहृतं च, किं पौनरुक्त्येनेत्याशङ्क्याह — निराकाङ्क्षेति। न खलु तत्र वक्त्रादिवैशिष्ट्यपुरस्सरं व्यञ्जकत्वादि निरणायि, अत्र तु तथेति प्रतीतेर्नैराकाङ्क्ष्यम्। किञ्च प्रासङ्गिकतया तत्रैतत् प्रमेयम्, अत्र तु प्राप्तकालतयेत्याह—प्राप्तेति। एकैकशो वक्त्रादीनां यद् वैलक्षण्यं तन्मात्रमेतावता प्रतिष्ठितम्। तेषां परस्परसंयोगमेलकेऽप्ययमेव न्याय इत्याह—वक्त्रादीनामिति। द्विकादिर्भेदो यस्य। अनेनैव क्रमेण एकैकोक्तया युक्त्या व्यञ्जकत्वं बहिर्द्रष्टव्यम्। यथा —

१. 'मुकवि' ख. पाठः. २. 'नैव क' इति मूलकोशपाठः. ३. 'द्विप्रभे' क. घ. पाठः.

लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम् ॥ १, २ ॥

**सम्प्रदायप्रकाशिनी**

कत्वं, तथा द्व्यत्रयादिवैशिष्ट्यादपीत्यर्थः। लक्ष्यव्यङ्ग्ययोश्चेति। येनैव वाच्यस्योदाहृतं तेनैव क्रमेण तयोरपीत्यर्थः। तत्रापि मिथः संयोगे

साहित्यचूडामणिः

दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वननदीस्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्तु जरठच्छेदा नलग्रन्थयः ॥

इति । अत्र कस्याश्चित् सरित्तटतमालवनविहितसङ्केतायाः परपुरुषोपभोगलौल्यलक्षणमर्थान्तरमभिव्यज्यते । तत्र तावत् तस्या वक्तृत्वं प्रतिवेशिन्या बोद्धव्यत्वम् । प्रायेणेत्यादि वाच्यम् । नीरन्ध्रा इति वाक्यम् । तद्वनेति देशः । क्षणं दृष्टिं दास्यसीति कालः । इहापीत्यभिनयः । सङ्केतकालजिज्ञासोः कामुकस्यापि सन्निधिः सम्भवी । किञ्चानेन क्रमेण वाच्यस्येव लक्ष्यव्यङ्ग्ययोरप्युदाहार्यत्वम् । तत्र लक्ष्यस्य यथा ममैव —

* गामउडघरपडोहर(?)सनीडरच्छाए वच्छ! मा वच्च ।
जत्थ वइवेढे(?)मूले दिट्ठिविसो अत्थि सुव्वए सप्पो ॥

इति । अत्र हालिकस्नुषायाः सर्प इति साध्यवसाना लक्षणा । तन्मूलं च तस्याः परिहरणीयत्वप्रख्यापनं व्यङ्ग्यम् । तत्र च मातुर्वक्तृत्वं पुत्रस्य बोद्धव्यता । गामउडेत्यादिना देशः । जत्थेत्यादिना वाक्यम् । मा वच्चेति निषेधे व्रजनस्य प्रकृतत्वात् प्रस्ताव इति । व्यङ्ग्यस्य यथा ममैव—

१. 'त्थइ', २. 'ड' ग. पाठः.

* गाम उडघरपडोहर(?) सनीडरथ्यायां वत्स! मा व्रज ।
यत्र वइवेढ(?)मूले दृष्टिविषोऽस्ति श्रूयते सर्पः ॥

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥ ३॥

---

सम्प्रदायप्रकाशिनी

द्विकादिभेद उन्नेयः । इह वाच्यस्य वक्त्राद्येकैकवैशिष्ट्याद् येन नये नोदाहृतं, तेनैव द्वित्रियोगादिवैशिष्ट्यात्, तथा लक्ष्यव्यङ्ग्ययोरेकैकवैशिष्ट्याद् द्वित्रियोगादिवैशिष्ट्याच्चेति[1] भेदप्रपञ्चोन्मीलनम् ॥ १,२ ॥

यथा शब्दध्वनावर्थस्य सहकारित्वं दर्शितं, तथैवेहापि शब्दस्य दर्शयितुमाह —शब्दप्रमाणेति । यो ह्ययमर्थो ध्वनति स हि शब्दैकप्रमाणकः, न पुनः प्रत्यक्षादिप्रमाणकः । अतः शब्दस्य सहकारित्वम् ।

साहित्यचूडामणिः

*चुम्बासि जप्पावेन्ती दूअं सहि! कीस करपओट्ठगअं ।
मामणणईसालुभत्ता(?) बिम्बोट्ठि! तुज्झ पाविट्ठं ॥

इति । अत्र बिम्बभ्रान्त्या शुकस्तवाधरं खण्डयिष्यतीति व्यज्यते । ततश्च 'कस्स व ण होइ रोसो' इतिवदनेकधा व्यङ्ग्यमुज्जृम्भते । तत्र सख्या वक्तृत्वं नायिकायाः श्रोतृत्वम् । कस्मात् चुम्बसीति निषेधे चुम्बनस्य प्रकृतत्वात् प्रस्तावः । बिम्बोष्ठीति वाच्यम् । मा मण्ण इति वाक्यम् । अन्यस्योपपतेः सन्निधिश्च सम्भवी । एवमन्यत्रापि ॥ १,२ ॥

अथ यथा शब्दस्य व्यञ्जकत्ववेलायामर्थस्य साहाय्यदायित्वम्, एवमर्थं प्रत्यपि शब्दस्येत्याह — शब्देति । व्यञ्जकाभिमतस्यार्थस्य तद्वाचक-

---

१. ति प्रभे' क. पाठः

---

* चुम्बसि जल्पयन्ती दूरं सखि ! कस्मात् करप्रकोष्ठगतम् ।
मा मण्णईसालुभत्ता (?) बिम्बोष्ठि! तव पापिष्ठम् ॥

शब्देति, नहि प्रमाणान्तरवेद्यो व्यञ्जकः ॥ ३ ॥

इति काव्यप्रकाशे अर्थनिर्णयो नाम
तृतीय उल्लासः ।

---

सम्प्रदायप्रकाशिनी

प्रमाणान्तरवेद्यस्यार्थस्य लौकिकत्वाद्[1]व्यञ्जकत्वं प्रसिद्धमित्याह—नहि प्रमाणान्तरेति ॥ ३ ॥

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-
पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्य-
काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-
योगीश्वरश्रीमत्त्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकवि-
श्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्यां
काव्यप्रकाशबृहट्टीकायां
तृतीय उल्लासः ।

---

साहित्यचूडामणिः

शब्दव्यतिरेकेण किं प्रमाणान्तरान्वेषणप्रयासेनेति सिद्धम् ॥ ३ ॥

लोकोत्तराः केचन लोचनेन सिद्धाञ्जनं[2] व्यञ्जनमाददानाः ।
अदृष्टपूर्वं रमणीयमर्थादर्थान्तरं द्रष्टुमुपक्रमन्ते ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां
तृतीय उल्लासः ।

---

१. 'द्' क. म. पाठः. २. 'न' घ. पाठः.

## अथ चतुर्थ उल्लासः ।

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयं, तथापि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह —

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ ।**
**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥ १ ॥**

---

सम्प्रदायप्रकाशिनी

### अथ चतुर्थ उल्लासः ।

इत्थं द्वितीयतृतीयाभ्यां शब्दार्थनिर्णये कृतेऽपि दोषगुणादीनामनवसरः, शब्दार्थात्मनः काव्यस्वरूपस्य[1] निश्शेषमनिरूपणादिति चतुर्थपञ्चमषष्ठेषु ध्वनिगुणीभूतव्यङ्ग्यचित्राख्याः काव्यभेदा निरूपणीया इत्याह वृत्तिकारः — यद्यपि शब्दार्थयोरित्यादिना । 'तददोषावि'ति सामान्यतः, 'इदमुत्तममि'त्यादिना च विशेषतो यद्यपि काव्यं दर्शितमेव, अथाप्युद्देशरूपत्वाद् दर्शनमात्रमेव[3] तत् । अविवक्षितवाच्यत्वादिविशेषसाकल्यसध्रीचीनतालक्षणेन प्रकर्षेणेह दर्शनीयमित्यभिप्रेत्याह —प्रदर्शित इति । हेयोपादेयतेति । दोषरूपाणां धर्माणां हेयता, अन्येषामुपादेयतेति विभागः । प्रथममिति । दोषादिनिरूपणादर्वाक् ।

अविवक्षितवाच्यो य इति । लक्षणामूले[4]ध्वनौ वाच्येऽर्थे विवक्षाभावात् सोऽविवक्षितवाच्यः । तत्र वाच्यमेकदार्थान्तरे संक्रा-

साहित्यचूडामणिः

### अथ चतुर्थ उल्लासः ।

ब्रह्माण्डकेतकीषण्डे सहकारयुवा कविः ।
तदुपज्ञा जयत्येका माघवीव सरस्वती ॥

उल्लासद्वयसौहार्दमुन्निद्रयति — यद्यपीति । व्याख्यातपूर्वमेतत् ।

अविवक्षितेति । वाकारः समुच्चये । यदाह —

---

१. 'व्यस्य' क. ग. पाठः. २. 'व्यप्रभे' क. घ. पाठः. ३. 'त्रकमं'; ४. 'ले' ग. पाठः.

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्यविवक्षितं वाच्यं यत्र सः ध्वनावित्यनुवादाद् ध्वनिरिति ज्ञेयः। तत्र वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम्। यथा —

सम्प्रदायप्रकाशिनी

मति, अन्यदात्यन्तं तिरस्क्रियते। अत्रोक्तवाच्यवैचित्र्यादयं ध्वनिर्द्विविधः अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति।

तदेतद् व्याचष्टे — लक्षणामूलगूढेत्यादि। गूढग्रहणं ध्वनित्वप्रकाशनाय। अगूढत्वे गुणीभूतव्यङ्ग्यता वक्ष्यते। अविवक्षितं वाच्यं यत्रेत्यविवक्षितवाच्यपदस्य विग्रहः। ध्वनावित्यनुवादादिति। तत्रेति तच्छब्दपरामृष्टतया कृतोऽप्यनुवादो यद्वृत्तमपि ध्वनिविशेषणं गमयतीत्यर्थः। अविवक्षितवाच्याख्ये ध्वनौ इति यावत्। अनुपयुज्यमानत्वादिति। उपादानलक्षणायां हि वाच्यः कुन्तादिरर्थः प्रवेशनादिक्रियायामनुपयुज्यमानः सन्नर्थान्तरे परिणमति। सा

साहित्यचूडामणिः

"अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम्॥"

इति।

लक्षणेति। लक्षणामूलत्वाभावे विवक्षितान्यपरवाच्यत्वं यत्राभिधाव्यापारहेतुत्वम्[1] अगूढत्वे गुणीभूतव्यङ्ग्यता। प्राधान्याभावे रसवदाद्यलङ्कारतया गुणीभूतव्यङ्ग्यत्वं प्रसज्येत। यत्रेति। बहुव्रीहिणा व्यङ्ग्यार्थप्राधान्यं ध्वन्यते। ननु ध्वनाविति सिद्धविभक्त्या सप्तम्या कथं निर्देशः अविहितपूर्वत्वात् तस्य, पूर्ववाक्ये विधिपूर्वकत्वनैयत्याच्चोत्तरवाक्यानुवादस्येत्यत्राह— ध्वनाविति। अनुवादेन विधिरनुमेयः अस्त्यविवक्षितवाच्यो नाम ध्वनिः। तत्र वाच्यं द्विधेति। अनुपयुक्तिरनुपपत्तिश्चेति द्वैविध्यं वाच्यस्य। आद्यायामर्थान्तरसङ्क्रमणम् अन्यत्रात्यन्ततिरस्कारः। योऽर्थ उपपद्यमानोऽपि तावतानुपयोगाद् धर्मान्तरसंवलनादन्यतामिवावलम्बमानः स्रक्सूत्रन्यायेनास्ते

१. 'वेऽपि र' क. ख. पाठः. २. 'ता' ख. पाठः.

गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥

अत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो[1] व्यापादिता इति तुल्ययोगिता, मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा च । एषूदाहरणेषु स्वतस्सम्भवी व्यञ्जकः ।

---

सम्प्रदायप्रकाशिनी

**गाढकान्तेति** । निजाधरं निर्दशन् अरिवधूजनस्याधरान् कान्तदशनक्षतदुःखादमोचयदिति विरोधाभासः । समकालमित्यनेन निर्दशन्निति लडर्थ उद्घाटितः । अधरनिर्दशनमोचनेनासां भर्तृव्यापादनं व्यञ्जितम् । अलङ्कारान्तरमपि व्यज्यत इत्याह — **मम क्षत्येत्यादि** ।

साहित्यचूडामणिः

**गाढेति** । विद्रुमदलानीवोष्ठान् । 'उपमितं व्याघ्रादिभिरि'ति समासः, व्याघ्रादेराकृतिगणत्वात् ।

**विरोधेति** । केनचित् स्वाधरे निर्दश्यमाने तदन्येषां दन्तखण्डनपरिहारो विरुध्यते, निजाधरनिर्दशनलक्षणायाः शत्रुवधूजनोष्ठव्यथापरिहाररूपायाश्च क्रियाया मिथो विरोधात् । तथा वक्ष्यति 'क्रिया द्वाभ्यामि'ति । एकस्याः काले तदन्यस्या अपि क्रियायास्तुल्यो योग इति विवक्षणादियं तुल्ययोगिता, न पुनः 'नियतानां सकृद्धर्म' इति दशमे लक्ष्यमाणा । नच

"न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया"

इत्यादिग्रन्थान्तरानुरोधात्, तल्लक्षणायोगाद् इत्यलं व्याख्येयग्रन्थपौर्वापर्यवि-

कैलासस्य प्रथमशिखरे वेणुसम्मूर्छनाभिः
श्रुत्वा कीर्त्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥

सम्प्रदायप्रकाशिनी

तद्बुद्धिरिति तच्छब्देन वर्ण्यनायकाधरप्रत्यवमर्शः । अत्र स्वतस्सम्भविनालङ्कारेणालङ्कारः । स्वतस्सम्भविनं[1] स्तावन्निगमयति— एषूदाहरणेष्विति ।

कैलासस्येति । प्रथमशिखर इति दिङ्मातङ्गै[2]र्नेदिष्ठता सूचिता । वेणुशब्देन वेणुवादो लक्ष्यते । सम्मूर्छना सम्भेदः । तानकल्पवेणुनादसम्मूर्छनोपलक्षिततया गीयमानामित्यर्थः । स्रस्तापाङ्गाः कर्णजाहाभिमुखोच्चलितकटाक्षाः । तथा कटाक्षक्षेपेण श्रुता कीर्त्तिः कर्णपरिसरे धवलोज्ज्वला दृष्टेति सिद्धवत्कृत्याह — सरसबिसिनीकाण्डसंजातशङ्का इति । श्रवणपुलिन इति श्रवणस्य पुलिनत्वेन रूपणं शङ्कितबिसिनीकाण्डयोगात् । हस्तमावर्तयन्तीति । जातिस्वाभाव्यान्मृणालगृध्नुतैषामाविष्कृता । अत्र परिपाण्डुकीर्त्तिसन्दर्शनादिना

साहित्यचूडामणिः

पर्ययव्यलीकोद्घाटनेन । तद्बुद्धिरिति अधरस्याभिप्रायः । तत्र चेतनाचेतनविचारो निरुपयोगः । यथाहुः —

"अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधाः ॥"

इति । अत्राप्युपमेयस्योपमानतया संभावनाकारं वक्ष्यमाणमुत्प्रेक्षालक्षणं न संघटते ।

---

१. 'प्रस्तावं निग' क. घ. पाठः  २. 'ङ्गै' ग. पाठः.

अत्र वस्तुना येषामप्यर्थावगमो[1] नास्ति, तेषामप्येवमादिबुद्धिजननेन चमत्कारं[2] करोति त्वत्कीर्त्तिरिति वस्तु ध्वन्यते।

केसेसु बळामोडिअ तेण अ समरम्मि जअसिरी गहिआ।
जह कन्दराहि विहुरा तस्स दढं कण्ठअम्मि संठविआ॥

अत्र केशग्रहावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठेऽगृह्णन्नित्युत्प्रेक्षा[3], एकत्र सङ्ग्रामे विजयदर्शनात् तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यहेतुः

सम्प्रदायप्रकाशिनी

कविप्रौढोक्तिमात्रनिष्पादितेन वस्तुना तिरश्चामप्येवंबुद्धिजननेन चमत्कारकारिणी कीर्त्तिरिति वस्तु।

केसेसु बळेति।

केशेषु बलात्कारेण तेन(च) समरे जयश्रीर्गृहीता।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥

समरे जयश्रीस्तेन तथा केशेषु गृहीता, यथा विद्विषो गिरिकन्दराभिः कण्ठे गृहीता इति।

अत्र केशग्रहेति उद्दीपितमदनत्वे हेतुः। एकत्रेति। इतरथा कन्दरासम्बन्धासम्भवात्। काव्यहेतुः काव्यलिङ्गालङ्कारः।

साहित्यचूडामणिः

अर्थावगम इति। विजयगाथारूपा कीर्त्तिरित्यर्थवत्त्वनैयत्यात्।

केसेसु इति।

केशेषु बलात्कारेण तेन[4] च समरे जयश्रीर्गृहीता।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥

इति। कण्ठगतप्राणाः सन्त उज्जीविताः[5] कण्ठालिङ्गनेनोपलक्षिताश्च। केशग्रहणं विपक्षसंबन्धिजयलक्ष्म्यामारोप्यते। समासोक्त्या नायिकाकेशग्रहो व्यज्यते। तया च सह नायकस्योपभोगः। तदवलोकनादुद्दीपितमदना[6] इत्युत्प्रेक्षा।

१. 'धि' ख. पाठः. २. 'त्करो', ३. 'क्षया ए' क. पाठः. ४. 'न स' क. ख. पाठः. ५. 'था स' ख. पाठः. ६. 'नस इ' क. ख. पाठः.

न पलाय्य गतास्तद्वैरिणः अपितु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च ।

गाढालिङ्गणरहसुज्जअम्मि[1] दइए ळहुं[2] समोसरइ ।
माणंसिणीए माणो पेळ्ळणभीओ व्व हिअआहि ॥

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु ।

---

सम्प्रदायप्रकाशिनी

**गाढालिङ्गणेति ।**

गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विन्या मानः प्रेरणभीत इव हृदयात् ॥

अत्र कविप्रौढोक्तिनिष्पादितेनोत्प्रेक्षालङ्कारेण मानप्रेरणसू[3]चितं प्रत्यालिङ्गनादि वस्तु ।

साहित्यचूडामणिः

**काव्यहेतुरिति** काव्यलिङ्गं, यद् वाक्यार्थरूपम्, एकत्र सङ्ग्रामे विजयदर्शनादित्युक्तत्वात् । **अपह्नुतिश्चेति[4]** । उत्प्रेक्षानुग्रहादियं व्यङ्ग्या । अन्यथा कन्दरास्तान् न त्यजन्तीति वक्तुमशक्यत्वात् । अलङ्काराणां व्यङ्ग्यत्वं चमत्कारायेति बह्वलङ्कारप्रदर्शनप्रयासः । यदाह —

"रूपकादिरलङ्कारवर्गो यो वाच्यतां गत. ।
स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः ॥
शरीरीकरणं[5] येषां वाच्यत्वेन[6] व्यवस्थितम् ।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥"

इति ।

**गाढेति ।**

गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विन्या मानः पीडनभीत इव हृदयात् ॥

इति ।

**उत्प्रेक्षया** मा नः पीडनभीत इव पलायत इत्याकारया ।

---

१. 'चलम्मि', २. 'रु' क. पाठः ३. 'नापहरण', ४. 'श्चेयमुत्प्रे' ग. पाठः. ५. 'र', ६. 'तो' क. ख. पाठः.

जा थेरं व हसन्ती कइवअणम्बुरुहबद्धविणिवेसा ।
दावेइ भुवणमण्डळमण्णं व्विअ जअइ सा वाणी ॥

अत्रोत्प्रेक्षया चमत्कारैककारणं नवंनवं जगद् अजरठा[1]ब्जासनस्था निर्मिमीत इति व्यतिरेकः । एषु कविप्रौढोक्तिमात्रनिष्पन्नः ।

जे ळङ्कागिरिमेहळाहि चळिआ सम्भोअखिण्णोरई-
फारुप्फुल्ळफणावळीकवळणे[2] पत्ता दरिद्दत्तणं ।

सम्प्रदायप्रकाशिनी

जा थे[3]रं वेति।

या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदेव जयति सा वाणी ॥

स्थविरो ब्रह्मा । हसन्तीवेतीवशब्दो भिन्नक्रमः ।

अत्रोत्प्रेक्षयेति । उत्प्रेक्षया कविप्रौढोक्तिकल्पितया[4] हसन्तीवेति[5] हासक्रियासम्भावनरूपयेत्यर्थः । चमत्कारैककारणं नवं नवमित्यन्यदेवेति पदस्य तात्पर्योद्घाटनम् । अजरठाब्जासनस्थेति कविवदनाम्बुरुहेत्यस्य विवृतिः। स्थविरा[6]सनाम्बुजं हि जरठम्। चतुष्टयमिदमुपसंहर्तुमाह— एषु कविप्रौढेति ।

जे ळङ्कागिरीति ।

साहित्यचूडामणिः

जा थेरमिति ।

या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदेव जयति सा वाणी ॥

इति ।

उत्प्रेक्षया स्थविरमिव हसन्तीत्याकारया । व्यतिरेक इति । सृज्यस्य जगतश्चमत्कारैककारणत्वादिर्व्यतिरेचको धर्मः ।

जे इति ।

१. 'ठाम्बुजास' क. पाठः. २. 'णे' ख. पाठः. ३ 'ठे', ४. 'या हा' ख. घ. पाठः. ५. 'ति सम्भा' ग. पाठः. ६. 'राम्बुजासनं हि' ख. पाठः.

[1]ते एह्निं मळआणिळा विरहिणीणीसासस[2]म्पक्किणो
जादा झत्ति सिसुत्तणे वि बहळा तारुण्णपुण्णा व्विअ ॥

अत्र निःश्वासैः प्राप्तैश्वर्याः किं किं न कुर्वत इति वस्तुना वस्तु व्यज्यते ।

सहि! विरइऊण माणस्स मज्झ धीरत्तणेण ओआसं ।
पिअदंसणविह्वळं खणे[3]खणे झत्ति तेण ओसरिअं ॥

सम्प्रदायप्रकाशिनी

ये लङ्कागिरिमेखलातश्चलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकबलनात् प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

अत्र व्यञ्जकं वस्तु कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नम् ।

सहि विरइऊणेति ।

सखि! विरच्य मानस्य मम धीरत्वेनावकाशम् ।
प्रियदर्शनविह्वलं क्षणेक्षणे झटिति तेनापसृतम् ॥

मम धैर्यं मानस्यावकाशं विरच्य प्रिये दृष्टे सति स्वयं वैह्वल्येन पलायिष्टेत्यर्थः ।

साहित्यचूडामणिः

ये लङ्कागिरिमेखलायाश्चलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकबलने प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

इति ।

किं किमिति । अघटितमपि कार्यं घटयन्ति, यतस्ते शैशव एव तरुणिमानमवलम्बितवन्तः किमन्यदेषामसाध्यम् ।

सहीति ।

१. 'दे' क. पाठः. २ 'संसग्गिणो' ख. पाठः. ३. 'णम्मि सहसत्ति' इति

अत्र वस्तुनाकृतेऽपि प्रार्थने प्रसन्नेति विभावना[1], नूनं प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा च[2]।

ओल्लोल्लकरअरअणक्खएहि तुह लोअणेसु मह दिण्णो[3]।
रत्तंसुअप्पसादो[4] कोवेण पुणो इमे ण अक्कमिआ ॥

अत्र किमिति लोचने कुपिते वहसि इत्युत्तरालङ्कारेण

सम्प्रदायप्रकाशिनी

अत्र वस्तुनेति । वस्तुना मानपलायनरूपेण । प्रियदर्शनस्येति । अत्रापि मानपलायनमेव[5] वस्तु व्यञ्जकम् ।

ओल्लोल्लेति ।

आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः ।
रक्तांशुकप्रसादः कोपेन पुनरेते नाक्रान्ते ॥

तव यान्येतान्यार्द्रतराणि करजरदनक्षतानि तैर्मम लोचनाभ्यां रक्तांशुकं प्रसादत्वेन दत्तम्[6]। तत्परिधानवशादेवानयोरारुण्यं न पुनः कोपेनाक्रान्ते । इह रक्तांशुरित्यपि विवक्षितम् ।

साहित्यचूडामणिः

सखि! विरचय्य मानस्य मम धीरत्वेनावकाशम् ।
प्रियदर्शनविह्वलं क्षणे सहसेति तेनापसृतम् ॥

इति । इतीति अनुभूतेन प्रकारेण ।

अकृतेऽपीति । प्रार्थनाक्रियाप्रतिषेधेऽपि ।

"क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना"

इति वक्ष्यते । प्रियदर्शनस्य नायकत्वं मानस्य प्रतिनायकत्वं धैर्यस्य तत्सामन्तत्वमिति व्यवस्थायामुत्प्रेक्षा चेति पक्षान्तरम् ।

ओल्लोल्लेति ।

अर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः ।

१. 'ना प्रि' इति मूलकोशपाठः. २. 'च ध्वन्यते' ख. पाठः. ३. 'ण्णं', ४. 'अं' क. पाठः. ५. 'नस्य पलायनरूपमेव व' ग. पाठः. ६. 'मि' ग., 'कमित्य' ग. पाठः

न केवलमार्द्रनखक्षतानि गोपायसि यावत् तेषामहं प्रसादपात्रं जातेति वस्तु ।

महिळासहस्सभरिए तुह हिअए सुहअ! सा अमाअन्ती ।
दिअहं अणण्णअम्मा अङ्गं तणुअं पि तणुएइ ॥

अत्र हेत्वलङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः । एवं द्वादश भेदाः ॥ १६–१७ ॥

---

सम्प्रदायप्रकाशिनी

माहिळेति ।

महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती ।
दिवसमनन्यकर्मा अङ्गं तन्वपि तनयति ॥

हेत्वलङ्कारेणेति । यतो न मान्ती, अतस्तनयतीत्येवंरूपेण । अर्थशक्तिमूलमुपसंहरति— एवं द्वादशभेदा इति । स्वतस्सम्भविना वस्तुना वस्तु, स्वतस्सम्भविना वस्तुनालङ्कारः, स्वतस्सम्भ-

साहित्यचूडामणिः

रक्तांशुकप्रसादः कोपेन पुनरिमे नाक्रान्ते ।

इति । रक्तांशुकमेव प्रसादः पारितोषिकम् । प्राकृतत्वान्नपुंसकत्वम् ।

उत्तरेति । प्रश्नवाक्योन्नयनानुकूलेन । न केवलमिति । अभिनवानां नखदशनक्षतानामगोपनमित्येतावदेव न, अपितु तेषामहं प्रसादपात्रं जातेति ।

महिळेति ।

महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती ।
दिवसमनन्यकर्मा अङ्गं तन्वपि तनयति ॥

इति ।

हेत्वलङ्कारेणेति । तव चेतस्यवकाशलाभाय शरीरस्य तनूकरणमिति

---

१. 'तुत्वेऽपि' क. पाठः. २. 'ति' क. घ. पाठः.

शब्दार्थोभयभूरेकः

यथा —

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥

---

सम्प्रदायप्रकाशिनी

विनालङ्कारेण वस्तु, स्वतस्सम्भविनालङ्कारेणालङ्कार इति चत्वारः । अनयैव प्रक्रियया कविप्रौढोक्तिनिष्पन्नेन वस्तुना वस्त्वित्यादयश्चत्वारः; कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नेन वस्तुना वस्त्वित्यादिकाश्चत्वार इति द्वादशभेदता ॥ १६–१७½ ॥

अथोभयशक्तिमूल एक एवोदाह्रियते — अतन्द्रचन्द्रेति । चन्द्रः शिरोभूषणविशेषः इन्दुश्च । तारका कनीनिका नक्षत्रं च । श्यामा यौवनमध्यस्था निशा च । अत्रातन्द्रेत्यादावनेकार्थत्वाच्छब्द-

साहित्यचूडामणिः

काव्यलिङ्गेन । शरीरतनूकरणरूपे कारणे पूर्णेऽपि प्रियहृदयस्यान्तर्वृत्त्यभावाद् विशेषोक्तिः । यद् वक्ष्यति —

"विशेषोक्तिरखण्डेषु कारणेषु फलावचः"

इति ॥ १९-१७½ ॥

उभयशक्तिमूलमाह — शब्दार्थेति । एक इति । प्रकारवैचित्र्यस्य कल्पयितुमशक्यत्वात् । शक्यत्वे वा तदर्थभागं शब्दभागं वा मनाक् प्राधान्यादनुप्रविशति, न पुनस्तुलाधृतवदुपलभ्यत इति । यथा वक्ष्यति — 'वाक्ये द्व्युत्थ' इति ।

अतन्द्रेति । तन्द्रालस्यं तदभावेनौज्ज्वल्यं लक्ष्यते । श्यामा युवतिर्निशा च । तत्र कामिनी यामिनी वा काचिद् वर्णनीया । तत्र प्रस्तुतायाम् अभिधा, अन्यत्र व्यञ्जनम् । अत्र शब्दार्थयोरुभयोरपि शक्तिर्निबन्धनम् । एतेनास्य 'हेमाद्' भेदो व्याख्यातः, यत्रोभयत्रापि वाचकत्वम् । उज्ज्वलहेमाभरणा ।

---

१. [illegible]

**भेदा अष्टादशास्य तत् ॥ १८ ॥**

अस्येति ध्वनेः ॥ १८ ॥

ननु रसादीनां बहुभेदत्वे कथमष्टादशैव भेदा इत्यत आह —

**रसादीनामनन्तत्वाद् भेद एको हि गण्यते ।**

---

सम्प्रदायप्रकाशिनी

शक्तिमूलता, समुद्दीपितमन्मथेत्यादौ त्वर्थशक्तिमूलता प्राधान्येन प्रतीयत इत्युभयशक्तिमूलोऽयम् ।

तानिमान् समष्टिभूतान् भेदान् राशीकृत्य संचष्टे — **भेदा अष्टादशेति** ।

अस्येति सर्वनाम्ना सन्निहितस्योभयशक्तिमूलस्य परामर्शभ्रमो मा भूदित्याह — **अस्येति ध्वनेरिति** । अविवक्षितवाच्योऽपि अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विरूपः, विवक्षितान्यपरवाच्यस्त्वर्थशक्तिमूलो रसादिरसंलक्ष्यक्रम एकः, संलक्ष्यक्रमस्तु शब्दशक्तिमूलोऽलङ्कारध्वनिर्वस्तुध्वनिश्चेत्युभयविधः, अर्थशक्तिमूलस्तु द्वादशात्मा, उभयशक्तिमूलस्त्वेक इति अष्टादश भेदाः ॥ १८ ॥

साहित्यचूडामणिः

लोचनकनीनिकास्फुरणशालिनी कामिनी । उज्ज्वलेन्दुबिम्बाभरणा नक्षत्रस्फुरणयोगिनी च यामिनी । समुद्दीपितमन्मथत्वं कदाचिदालम्बनतया कदाचिदुद्दीपनत्वेन । अत्र चन्द्रादिशब्दानां परिवृत्त्यक्षमत्वात् प्राकरणिकतत्तादृगर्थद्वयप्रतिपादनप्रवृत्तत्वाच्च शब्दार्थशक्त्योर्द्वयोरन्यूनत्वानतिरेकेण सामरस्यम् ।

निगमयति — **भेदा इति** । एतावति पर्वणि अष्टादश भेदाः । तथाहि — अविवक्षितवाच्यस्य द्वौ अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति । विवक्षितान्यपरवाच्यस्य रसादिरसंलक्ष्यक्रम एकः, अनुस्वानोपमव्यङ्ग्ये शब्दशक्तिमूलौ द्वौ, अर्थशक्तिमूला द्वादश, उभयशक्तिमूल एक एवेति ।

विप्रकृष्टार्थपरामर्शार्थमिदंशब्दप्रयोग इत्याह — **अस्येति ध्वनेरिति** ॥

---

१. 'दशेत्य', २. 'कत्येर' ख- पाठः. ३. 'त्वेति' क. ख. पाठः.

अनन्तत्वादिति। तथाहि—नव रसाः। तत्र शृङ्गारस्य द्वौ भेदौ सम्भोगो विप्रलम्भश्च, तत्र सम्भोगस्यापि परस्परदर्शनालिङ्गनपरिचुम्बन[1]कुसुमोच्चयजलकेलिसूर्यास्तमयचन्द्रोदय-[2]र्तुवर्णनादयो बहवो भेदाः, विप्रलम्भस्याभिलाषादय उक्ताः, तयोरपि विभावानुभावव्यभिचारिवैचित्र्यं, तत्रापि नायकयोरुत्तमाधममध्यमप्रकृतित्वं, तत्रापि देशकालावस्थाभेद इत्येकस्यैव रसस्यानन्त्यं, का गणना [3]सर्वेषाम्। असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिरेकभेद एव गण्यते।

**वाक्ये द्व्युत्थः**

द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः।

**पदेऽप्यन्ये**

---

सम्प्रदायप्रकाशिनी

एषूभयशक्तिमूलो वाक्यैकप्रकाश्य इत्याह — **वाक्ये द्व्युत्थ** इति।

अन्यत् सप्तदशकं पदप्रकाश्यतयापि सम्भवतीत्याह— **पदेऽप्यन्य** इति।

साहित्यचूडामणिः

**वाक्य** इति। उभयशक्तिसमर्थो वाक्य एव, अत्र शक्तिद्वयस्य तुलाधृतवदवस्थानात्।

अथान्येषां पदविषयत्वमप्यस्तीत्याह — **पदे**ऽपीति। अन्ये एकैकशक्तिमूलाः सप्तदश। यदाह —

"अविवक्षितवाच्यस्य पदवाक्यप्रकाश्यता।
तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः॥"

इति।

---

१. 'वादिक', २. 'र्तुषट्कव', ३. 'तन्येषाम्' ख. पाठः.

अपिशब्दाद् वाक्ये । एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन[1] वाक्यद्योत्यापि भारती भासते ।

तत्र पदप्रकाश्ये क्रमेणोदाहरणं—

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥

सम्प्रदायप्रकाशिनी

अपिशब्दस्योक्तसमुच्चयपरतां दर्शयति— अपिशब्दाद् वाक्य इति । एते समनन्तरमुदाहृताः । पदप्रकाश्यास्तूदाहरिष्यन्ते । नन्वेकपदद्योत्येन व्यङ्ग्येन कियती शोभा भवतीत्यत आह— एकावयवस्थितेनेत्यादि[2] । वाक्यद्योत्यापीति । यथाहि सर्वालङ्कारपरिष्कृतव्यापि[3] कामिनी एकेनैवैकावलीप्रमुखेन[4] भूषणेन भूयसा भासते, तथा वाक्यप्रकाश्यापि भारती पदप्रकाश्येन व्यङ्ग्येन । क्रमात् पदप्रकाश्यानुदाजिहीर्षुराह— तत्र पदप्रकाश्य इति ।

यस्य मित्राणीति । वाक्यत्रयेऽपि स्थिरप्रकृतित्वमस्य व्यज्यते । चतुर्थपादवाक्यद्वयेन त्वन्यवैलक्षण्येन धन्यता ।

साहित्यचूडामणिः

अपिरुक्तसमुच्चय इत्याह— अपिशब्दादिति । ननु कथमेकदेशिकः पदविषयो ध्वनिर्महावाक्योपयोगीत्यत्राह —एकेति । दृष्टान्तबलादेतदङ्गीकार्यम् । यदाह—

"विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥
अनिष्टस्य स्मृतिर्यद्वदापादयति दुष्टताम् ।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणः ॥"

इति ।

१. 'व्यङ्ग्यापि' इति मूलकोशपाठः. २. 'वांवयवाल' ख. ग. पाठः. ३. 'हि' क. पाठः. ४. 'नैका' क. घ. पाठः.

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनिर्यन्त्रणत्वस्नेहपात्रत्वादिसंक्रमितवाच्याः ।

खळववहारा दीसन्ति दारुणा जइवि तहवि धीराणं ।
हिअअवअस्सबहुमआ णहु ववसाआ विमुज्झन्ति ॥

सम्प्रदायप्रकाशिनी

आश्वस्तेति । अत्र द्वितीयमित्रशब्दस्य व्यङ्ग्यम् । आदिशब्देनाश्वस्तत्वादि द्वितीयशत्रुशब्दस्य । अवश्यरक्ष्यत्वसर्वप्रकारनिरपराधत्वादयस्तु द्वितीयानुकम्प्यशब्दस्य । इह मित्रादिशब्दाः प्रत्येकमुदाहरणं, प्रतिस्वं वाक्यपरिपूर्तेः । अतः पदप्रकाश्यत्वेनोदाहृतम् ।

खळववहारेति ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता नखलु व्यवसाया विमुह्यन्ति ॥

धीरेषु व्यवस्यत्सु खलानां व्यवहारा यद्यपि तद्व्यवसायदूषणपरतया लोके वर्धन्ते, तथापि तेषां ते व्यवसाया न विमुह्यन्ति न व्याकुलीभवन्ति । अविमोहेन फलादप्रच्यावो व्यज्यते । दारुणं खलेषु दूषयत्स्वपि स्वेन हृदयेन वयस्यैश्च बहुमतत्वमविमोहने हेतुः ।

साहित्यचूडामणिः

"सामानाधिकरण्यं हि रूपभेदमपेक्षते"

इति नीत्या द्वितीयमित्रादिशब्दाः स्खलद्गतित्वादर्थान्तरपरिणमिताः । मित्रशत्र्वनुकम्प्यशब्दाः क्रमेण विस्रब्धत्वरूप आश्वस्तत्वे कदर्थनाशून्यत्वाकारे निर्यन्त्रणत्वे सौजन्यभाजनत्वलक्षणे स्नेहपात्रत्वे च संक्रमितवाच्याः । अप्रच्युतस्वभावत्वं नाम सादृश्यं सर्वत्र संबन्धः । वर्णनीयस्य महापुरुषलक्षणसम्पन्नत्वं व्यङ्ग्यम् । आदिपदात् संपन्नत्वाचकितत्वसंवर्धनीयत्वादिस्वीकारः । मित्रादीनामेकवाक्यवर्तिनामप्येकार्थीभावसमन्वयाभावात् पदप्रकाश्यता ।

खलेति ।

१. 'त्वादि ।' क. ख. पाठः. २. 'नाश्व' ग. पाठः. ३. 'त्वं' क.-ग. पाठः. ४. 'दच्यवता व्य' ख पाठः. ५. 'इहैं' ख. ग. पाठः. ६. 'त' क. ख. पाठः.

अत्र विमुह्यन्तीति ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते। यथावा —

सम्प्रदायप्रकाशिनी

अत्र पदप्रकाश्यमत्यन्ततिरस्कृतवाच्यं दर्शयति — अत्र विमुह्यन्तीति ।

एवं लक्षणामूलौ पदप्रकाश्यतयोदाहृत्यासंलक्ष्यक्रममुदाहरति — लावण्यं तदसावित्यादि । तल्लावण्यमसौ कान्तिस्तद्रूपं स वचःक्रमः तदा तत्सन्निधावानन्दहेतुः, अधुना तु तद्विरहे ज्वरायत इत्यत्र तदादिभिः सर्वनामपदैरनुभवैकगोचराः प्रतीतिविशेषाः प्रथन्ते। अतः पदप्रकाश्या असंलक्ष्यक्रमध्वनयोऽमी ।

साहित्यचूडामणिः

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता नखलु व्यवसाया विमुह्यन्ति ॥

हृदयमेव वयस्यः सुहृत् । मोहो हि न सर्वेषां यावदनधिगतपरमार्थानां तत्रापि केषाञ्चिदेवेति व्यवसायसंबन्धिनो विमुह्यतेरत्यन्ततिरस्कारः । न खल्वत्रानुपयुक्तिमात्रं, यावदनुपपत्तिरेव । ततश्चासम्यक्त्वं लक्ष्यते। सामान्यविशेषभावः संबन्धः, असम्यग्ज्ञानाविशेषत्वाद् विमोहस्य। व्यवसितकार्यनिर्वहणं व्यङ्ग्यम् ।

लावण्यमिति । तदा संभोगसमये । अधुना विप्रलम्भवेलायाम् । ज्वरो महानिति साध्यवसाना । तदादीत्यदसः स्वीकारः ।

१. 'श्च' म. पाठः

मुग्धे! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
 मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
 नीचैः शंस हृदि स्थितो[1] हि ननु मे प्राणेश्वरः श्रोष्यति ॥

अत्र भीताननेति । एतेन[2] हि नीचैः शंसनविधानस्य युक्तता गम्यते । भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते ।

रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः ।
विकटभ्रुकुटि[3]विटङ्कितललाटपट्टो विभाति नृपभीमः ॥

सम्प्रदायप्रकाशिनी

मुग्धे मुग्धतयेति । इदं भीताननेत्यसर्वनामपदप्रकाश्यतयोदाहरणम् ।

भावादीनामिति । भावरसाभासभावाभासादयो हि वाक्यप्रकाश्यतायामपि[4] रसापेक्षया निकृष्टचमत्कारा इति पदप्रकाश्यत्वमेषां नोदाह्रियत इति भावः ।

अथ शब्दशक्तिमूलानुरणनरूपं ध्वनिद्वयं क्रमेणोदाहरति — रुधिरविसरेति ।

साहित्यचूडामणिः

मुग्धे इति । भीताननेत्येतत् प्राधान्येन रसद्योतकं पदम् ।

तदेवोपपादयति — एतेनेति । प्राणेश्वरस्य स्वहृदयावस्थानद्योतकेन । युक्तता औचित्यम् नन्वलक्ष्यक्रमो रस इव भावादिरपि पदप्रकाश्यतायामुदाहार्य इत्यत्राह — भावादीनामिति । अधिकं वाक्यप्रकाश्यत्वातिरिक्तं न वैचित्र्यम् । ग्रन्थगौरवचाकित्येन न तदुदाह्रियते विदग्धैः स्वयमुन्नेयमिति यावत् । यथा —'एवंवादिनि देवर्षावि'त्यत्र लज्जायां व्यज्यमानायामधोमुखीति पदम् ।

१. 'तो ननु मम प्रा', २. 'अनेन', ३. घटितभ्रु' क. पाठः. ४. 'ष्कृ' क. ग. पाठः.

अत्र भीषणस्य राज्ञो भीमसेन उपमानम् ।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिष्यन्दं विदधाति सदागमः ॥

काचित् सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति ।

---

सम्प्रदायप्रकाशिनी

अत्र भीषणस्येति, रुधिरप्रसाधितकरवालत्वादिना । भीमसेन उपमानं, भीमपदेन द्योत्यत इति शेषः । अतोऽयं पदप्रकाश्योऽलङ्कारध्वनिः ।

भुक्तिमुक्तीति । भुक्तिं मुक्तिं च करोतीति[1], यदेतदेकान्तसमादेशनमात्यन्तिक उपदेशः तत्र तत्पर इति सज्जनसमागमापेक्षार्थः । भुक्तिं सम्भोगं मुक्तिं विरहदुःखोपशमं च करोतीति[2], यदेतदेकान्तसमादेशनमुपह्वराह्वानं[3] तत्र तत्पर इति प्रच्छन्नकामुकापेक्षः ।

मुख्यया वृत्त्येति । सदागमपदेन सदागमपदव्यपदेशरूपयेत्यर्थः । सङ्केतदायिनः स्तुतिः सदागमपदद्योत्यं वस्त्विति यावत् ।

साहित्यचूडामणिः

रुधिरेति । हे नृप! त्वं भीमोऽसि । भीषणस्योक्तयुक्त्या भयानकस्वभावस्य राज्ञो वृकोदर उपमानम् ।

भुक्तीति । सदागमः सत्पुरुषस्य प्रियतमस्य प्राप्तिः अथच सत्पुरुषार्थोपयुक्त आगमः शास्त्रम् । प्रियतमागमनरूपोऽर्थ उच्यते । शास्त्रानुकूलो ध्वन्यते । तत्राभिधायां भुक्तिमुक्ती सङ्केततद्विघातौ, एकान्तसमादेशनं सङ्केतदानम्, आनन्दनिष्यन्दः क्रीडासौख्यम् । व्यञ्जने तु भुक्तिमुक्ती प्रवृत्तिनिवृत्तिकर्मप्रतिपाद्ये फले, एकान्तसमादेशनं विविक्तदेशोपदेशः, आनन्दनिष्यन्दः परमपुरुषार्थोन्मेषः ।

---

१. २. 'रोति' क. घ. पाठः. ३ 'ति हु प्र', ४. 'माग', ५. 'सन्तोपक्रमणत्त' ग. पाठः.

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।
आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥

अत्र वस्तुना कृतपरपुरुषपरिचया स्नातासीति वस्तु अधुनापदद्योत्यं व्यज्यते ।

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया सती ॥

---

सम्प्रदायप्रकाशिनी

अथार्थशक्तिमूलस्य द्वादशकस्य पदप्रकाश्यतायाः प्रस्तावः— सायं स्नानमुपासितमिति । अत्र सायंस्नानोपास्तिमलयजालेपनसूर्यास्तमयविस्रब्धागतयः क्लमानुदयहेतवः । तथापि यदभितः क्लान्तासि, तदेतदाश्चर्यम् ।

अत्र वस्तुनेति । वस्तुना अहेतुकक्लमरूपेण स्वतस्सम्भविना ।

तदप्रासीति । तद्विरहलक्षणमहादुःखोपभोगेन क्षपितनिश्शेष-

साहित्यचूडामणिः

सायमिति । उपासितम् आदरेणानुष्ठितम् । विस्रब्धं, न पुनरावेगयुक्तम् । येन हेतुना । तव नेत्रद्वन्द्वं मीलनव्यतिकररहितम् आसितुं स्थातुं न शक्नोति मीलितमेव वर्तते । पूर्वार्धेन श्रान्त्यातिशयस्य घर्मकालप्रयुक्तत्वशङ्का प्रतिक्षिप्यते । उत्तरार्धेन च परपुरुषोपभोगानन्तरं स्नातासीति व्यज्यते । अत्र प्राधान्यमधुनापदस्य, नेत्रद्वन्द्वविकारस्य वासनावशेन तत्कालेऽपि विद्यमानत्वात् ।

तदप्रासीति । निरुच्छ्वासतया योगाभ्यासोचितया ।

अतिशयोक्ती इति । प्रकारभेदेन प्रतिपादिते(नः) उभे मिथो निरपेक्षे, न

---

१. 'तया प्र' ख. पाठः. २. 'जालम्मन' ख. ग. पाठः. ३. 'तेन उ' क. ग. पाठः.

चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥

अत्र जन्मसहस्रैरुपभोक्तव्यानि[1] दुष्कृतसुकृतफलानि[2] वियोगदुःखचिन्ताह्लादाभ्यामनुभूतानीत्युक्तम्[3] । एवञ्चाशेष-चयशब्दद्योत्ये अतिशयोक्ती ।

क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् ।
बत वीर! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥

---

सम्प्रदायप्रकाशिनी

पातका तच्चिन्तासुकृतेन क्षीणपुण्यराशिः मुक्तिं गता । मुक्तिः कैवल्यं विरहोपशमश्च ।

एवञ्चाशेषचयेति वस्तुनालङ्कारव्यक्तिर्दर्शिता ।

क्षणदासाविति । क्षणदा रात्रिः[6] अक्षणदा क्षणदा न भवतीति विरोधाभासः, उत्सवदा न भवतीत्यर्थः[7] । अवनं वनं न भवतीति विरोधः, रक्षणमित्यर्थः[8] । अव्यसनं व्यसनं न भवतीति विरोधः, अवीनामसनं कालनमित्यर्थः ।

साहित्यचूडामणिः

पुनरेका, तथात्वे वाक्योदाहरणत्वप्रसङ्गात् । तत्र प्राधान्यमशेषचयशब्दयोः । यौ वियोगदुःखचिन्ताह्लादयोर्बाहुल्यप्रतिपादनेन पापपुण्ययोर्निरन्वयविनाशं व्यङ्क्तः ।

क्षणदा रात्रिः अक्षणदा अनुत्सवदा तद्विपरीता च । वनं काननम् अवनं रक्षणं तद्विपरीतं च । व्यसनं तात्पर्यम् अव्यसनम् अजविशेषाणां क्षेपणं पशुपालनादिराजीवः तद्विपरीतं च । क्षणदादिरूपाणां शक्तिरभिधारूपा तन्मूलो यो विरोधालङ्कारः तस्याङ्गेन समर्थनोपकरणभूतेनार्थान्तरन्यासेन ।

---

१. 'भोग्यानि', २. 'सुकृतदुष्कृतफ', ३ 'दनाभ्या' क. पाठः. ४. 'क्ति', ५. 'श्व', ६. 'त्रिः । क्षणदाक्षणदा न', ७. 'र्थः । व', ८. 'र्थः । व्य' ख. ग. पाठः.

अत्र शब्दशक्तिमूलविरोधालङ्काराङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति सर्वपदद्योत्यं वस्तु ।

तुह वल्लहस्स गोसम्मि आसि अहरो मिळाणकमळदळो ।
इअ णववहुआ साऊण कुणइ वअणं महीसमुहं ॥

अत्र रूपकेण त्वयास्य मुहुर्मुहुः परिचुम्बनं कृतं,

---

सम्प्रदायप्रकाशिनी

शब्दशक्तिमूलेति । विरोधालङ्काराङ्गेनेति बहुव्रीहिः । विरोधालङ्कारो हि समर्थकत्वेनार्थान्तरन्यासाङ्गम् ।

तुह वल्लहेति ।

तव वल्लभस्य प्रत्यूष आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥

महीसम्मुखीकरणं लज्जयावनतिः ।

साहित्यचूडामणिः

"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते"

इति वक्ष्यमाणेन विधिरपि त्वामनुवर्तते यतस्त्वयि पराङ्मुखे सर्वं पराङ्मुखं विपरीतस्वभावमिति वस्तु व्यज्यते । तत्र प्राधान्यं सर्वपदस्य ।

तुहेति ।

तव वल्लभस्य गोसर्गे आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥

इति ।

रूपकेणाधरो म्लानकमलदलमिति व्यस्तपदेन । त्वयेति कर्तु-

---

१. 'वाङ्गे' इति मूलकोशपाठः.

येन म्लानत्वमिति मिळाणादिपदद्योत्यं[1] काव्यलिङ्गम् । एषु स्वतस्सम्भवी व्यञ्जकः ।

राईसु चन्दधवळासु ळळिअमप्फाळिऊण जो चावम् ।
एक्कच्छत्तं चिअ[2] कुणइ भुवणरज्जं विअम्भन्तो ॥

अत्र वस्तुना येषां कामिनामसौ[3] राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशातिवाह्यत इति भुवनराज्यपदद्योत्यं वस्तु प्रकाश्यते ।

---

सम्प्रदायप्रकाशिनी

मिळाणादिपदद्योत्यमिति[4] मिळाणकमळदळमिति[5] पदेन द्योत्यमित्यर्थः । स्वतस्सम्भविचतुष्कं निगमयति—एषु स्वत इति ।

राईसु चन्देति ।

रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमेव करोति भुवनराज्यं विजृम्भमाणः ॥

अत्र वस्तुनेति । मन्मथवृत्तरूपेण कविप्रौढोक्तिमात्रनिष्पादितेन[6] ।

साहित्यचूडामणिः

निर्देशः परिचुम्बनेनेति करणस्य । काव्यलिङ्गं व्यङ्ग्यं हेतोर्वाक्यपदार्थता ।

राईसु इति ।

रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥

इति ।

तेभ्यो नेति । यः कश्चिदपि । तैः कामिभिः । भुवनेति । सार्वत्रिकीहँ सार्वभौमस्याज्ञा ।

---

१. 'मिणाळादि' ख. पाठः. २. 'वि', ३. 'नां रा' क. पाठः. ४. 'मिणाळादि', ५. 'मिणाळक' क. ख. ग. घ. पाठः. ६. 'ति' ग. पाठः.

निशितशरधियार्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः ।

वारिज्जन्तो वि पुणो सन्दावकदत्थिएण हिअएण ।
थणभरवअस्सएण विसुद्धजाई ण चलइ से हारो ॥

सम्प्रदायप्रकाशिनी

**निशितशरेति**। अराले वक्रे यौवन इत्यर्थः। निशितशरधिया दृशि स्वबलं विश्वविजयसामर्थ्यमर्पयति। अत्रोत्तरार्धार्थो हेतुः। व्यतिकरो विजातीयसम्भेदः।

**अत्र वस्तुनेति**। वस्तु स्वबलार्पणरूपम्।

**वारिज्जन्तो वीति**।

वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥

सन्तापकदर्थितेन हृदयेन वारितोऽपि कम्पान्न चलति कम्पमान एव वर्तत इत्यर्थः।

साहित्यचूडामणिः

अराले वक्रे वयसि यौवने। सा च दृक् च। व्यतिकरं मिश्रणम्। अवस्थाश्चिन्तामोहादयः।

युगपदिति। इतरथा व्यतिरेकानौचित्यात्।

वारिज्जन्तो इति।

वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥

इति। विरहवेदनातुरायां हारादिशिशिरोपचारद्वेषिण्यां नायिकायां सख्या

१. 'वों हे' ग. पाठः. २. 'न वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन वा' ख. पाठः. ३. 'म्पमानश्चल' ध. पाठः. ४. 'कम्पं मि' ख. पाठः. ५. 'पि पुनः पु' ख. पाठः. ६. 'त्यजल' ख. ग. पाठः.

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्त इति न चलतीति पदव्यङ्ग्यं वस्तु ।

सो मुद्धसामळङ्गो धम्मिळ्ळो कळिअळळिअणिअदेहो ।
तीए खंधाहि बळं ळहिअ सरो सुरअसङ्गरे जअइ ॥

अत्र रूपकेण मुहुराकर्षणे तथा केशपाशः स्कन्धयोः प्राप्तः, यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति स्कन्धपदद्योत्या विभावना । एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः ।

---

सम्प्रदायप्रकाशिनी

**सो मुद्धेति ।**

स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद् बलं लब्ध्वा स्मरः सुरतसङ्गरे जयति ॥

इति धम्मिल्लस्य स्मरत्वेन रूपणम् । स्कन्धशब्दः धम्मिल्लावलम्बनभूतमंसं सेनासन्निवेशरूपं चाह ।

**रतिविरतावपीति** विभावनाबीजभूतोऽभिलाषकारणभाव उक्तः । अथ कविनिबद्धचतुष्कोपसंहारः—**एषु कविप्रौढोक्तिमात्रेति ।**

साहित्यचूडामणिः

उक्तिः । विशुद्धा निर्मला जातिरुत्पत्तिर्यस्येत्यभिधा । आश्रयपरित्यागादिदोषशून्यजातिरिति व्यञ्जनम् ।

**कम्पमान एवेति ।** किं भविष्यतीति भीत्या । चलति मोक्तुं प्रभवति ।

**सो** इति ।

स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद् बलं लब्ध्वा स्मरः सुरतसङ्गरे जयति ॥

इति ।

**रूपकेण** धम्मिल्लः स्मरः कन्दर्पः इत्याकारेण । **रतिविरतावपीति ।** तद् द्वितीयसुरतस्य बभूवेति स्यात् ।

---

१. 'ति ॥' ग. घ. पाठः. २. 'रूपणं चा' क., 'मूलं चा' ख. ग. पाठः.
३. 'स्वजाति' ख. पाठः. ४. 'ति'. ५. 'वपि त' ख. ग. पाठः.

णवपुण्णिमामिअङ्कस्स[1] भणसु को तं सि सुहअ! मह सच्चं।
का सोहग्गसमग्गा[2] पओसरअणिव्व तुह अज्ज ॥

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवेत्यादिपओसेत्यादिपदद्योत्यं वस्तु व्यज्यते ।

सहि! णवणिहुवणसमरम्मि अङ्कवाळीसहीए णिबिडाए।
हारो णिवारिओ च्चिअ उव्वेरन्तो[3] तदो कहं रमिअं ॥

सम्प्रदायप्रकाशिनी

णवपुण्णिमेति ।

नवपूर्णिमामृगाङ्कस्य भण कस्त्वमासि सुभग! मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥

नवेति रागाविलत्वम् । पूर्णिमामृगाङ्केति प्रदोषकालाभिगमः ।

वस्तुना कस्त्वमसीति सोपालम्भानुयोगरूपेण । अथ का तवेति कथनात् पूर्वमप्यहमिवान्यास्तीति यत् प्रतीतं तदु(त्पा? पपा)-दयति — मयीवान्यस्यामिति । न तत इति मदनन्तरं न भव-(ती?)ति, अपि तु मत्समकालमेवेत्यर्थः ।

सहि! णवेति ।

सखि! नवनिधुवनसमरे अङ्कपालीसख्या निबिडया ।
हारो निवारित एवोद्ध्रियमाणस्ततः कथं रमितम् ॥

साहित्यचूडामणिः

णवेति ।

नवपूर्णिमामृगाङ्कस्य सुभग! कस्त्वमसि भण मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ।

इति । नवपूर्णिमाचन्द्रस्य त्वं कोऽसि किं कनिष्ठो ज्येष्ठो वेति भावः । न ततः पश्चात्त्वानुरक्तः, हरिद्रारागोऽसीति यावत् ।

सहीति ।

सखि! नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।
हारो निवारित एवोद्वर्तमानः ततः कथं रमितम् ॥

---

१. 'स्स सुहअ! को मि सि भणसु म' क., 'स्स सुहअ! को तं सि भणसु म' ख पाठः. २. 'स' क. पाठः ३. 'ळ्ळ' ख. पाठः.

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत्[1], तत् कथय कीदृगिति[2] व्यतिरेकः कहंपदगम्यः।

पविसन्ती घरदारं विवळिअवअणा विळोळिऊण पहं।
कंधा गहिऊण घडं[3] हाहा णट्ठेत्ति रुआसि सहि! किं ति॥

अत्र हेत्वलङ्कारेण सङ्केतनिकेतनं[4] गच्छन्तं दयितं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदपरं घटं गृहीत्वा गच्छेति वस्तु किंपदव्यङ्ग्यम्।

---

सम्प्रदायप्रकाशिनी

अङ्कपाली आलिङ्गनं तद्रूपया हारस्य वयस्यया हारो निबिडं निवारित एव। अतोऽसति हारे कथं रतमिति।

कीदृगित्यनेन यादृक् पूर्वं तादृङ् न भवतीति व्यतिरेकः।

पविसन्तीति।

प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।
स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि! किमिति॥

साहित्यचूडामणिः

इति। अङ्कपाल्येव सखी।

अन्यदेव,

"प्रवृत्ते रतिचक्रे तु नैव शास्त्रं न च क्रमः"

इति क्रमेण साटोपं किञ्चित् सुरतमभूत्। व्यतिरेक इति। रतान्तरेभ्यो वैलक्षण्यात्। स च कथमित्यनेन पदेन व्यङ्ग्यः।

पविसन्तीति।

प्रविशन्ती गृहद्वारं विवलितनयना विलोक्य पन्थानम्।
स्कन्धाद् गृहीत्वा कुटं हाहा नष्ट इति रोदिषि सखि! किमिति॥

इति।

झटिति घटस्फोटने मार्गावलोकनं हेतुः काव्यलिङ्गम्। गच्छन्तं, नतु गतवन्तं गमिष्यन्तं वा ईषद्विलम्बितगमनं गृहप्रवेशवेलायामवलोकितम्।

---

१. 'त् क', २. 'दृग्भूत इति' क. पाठः. ३. 'कु', ४. 'नं दृष्ट्वा गच्छन्तं दयितं यदि' ख. पाठः.

विह्ळं खणं तुमं सहि! दट्ठूण घडेण तरळतरादिट्ठिं ।
दारप्फंसमिसेणं अप्पा गरुओत्ति पाडिअविभिण्णो ॥

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वाराघातव्याजेन बुद्धिपूर्वं व्याकुलया त्वया घटः स्फोटित इति मया चेतितम् । तत् किमिति नाश्वासिषि तत् समीहितसिद्धये व्रज । अहं ते श्वश्रूनिकटे सर्वं साधयिष्यामीति द्वारस्पर्शव्याजेनेत्यपह्नुत्या वस्तु ।

जोह्णाए महुरसेण अ विइण्णतारुण्णऊसुअमणा सा ।
वुड्ढा वि णवोढा विअ परवहुआ अहह हरइ तुह हिअअं ॥

---

सम्प्रदायप्रकाशिनी

**विह्ळमिति ।**

विह्वलां क्षणं त्वां सखि! दृष्ट्वा घटेन तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेण आत्मा गुरुक इति पातितविभिन्नः ॥

श्रान्तां भवतीं दृष्ट्वा गुरुकोऽस्मीति बुद्ध्या द्वारस्पर्शमिषेण घटः स्वात्मानं पातयित्वा विभिन्नः ।

**जोह्णाए इति ।**

ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम् ॥

साहित्यचूडामणिः

**जोह्णाए इति ।**

ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम् ॥

---

१. 'कृ' २. 'वा', ३. 'अ' ख. पाठः. ४. 'दत्तस', ५. 'सं पुनः गृ' क. पाठः. ६. 'कथयिष्य इति' ख. पाठः. ७. 'आ हरइ सुहअ! तु' क. पाठः.

अत्र काव्यलिङ्गेन वृद्धां परवधूं चास्मानुज्झित्वाभि[1]लषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवधूपदप्रकाश्यः । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः । वाक्यप्रकाश्ये तु पूर्वमुदाहृतम् । शब्दार्थोभयशक्त्युत्थ[2]स्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः ।

**प्रबन्धेऽप्यर्थशक्तिभूः ॥ १९ ॥**

यथा गृध्रगोमायुसंवादादौ[3] । तथाच —

---

सम्प्रदायप्रकाशिनी

**अत्र काव्यलिङ्गेनेति** । अत्रोत्सुकमनस्त्वे ज्योत्स्नादि लिङ्गम् । चतुष्कमुपसंहरति — **एषु कविनिबद्धेति** । इत्थं सप्तदश भेदाः । तानिमान् पूर्वभेदैः सह राशीकर्तुमाह — **पञ्चत्रिंशदिति** । सप्तदशैते पदप्रकाश्याः पूर्वं वाक्यप्रकाश्यतया दर्शिता इति चतुस्त्रिंशत् । उभयशक्तिमूलस्तु वाक्यैकप्रकाश्य इति पञ्चत्रिंशद्भेदता ।

**अथार्थशक्तिमूलस्य द्वादशकस्य प्रकारान्तरेणापि सम्भवं दर्शयति — प्रबन्धेऽप्यर्थेति** ।

साहित्यचूडामणिः

इति । ज्योत्स्नामधुरसाभ्यां वितीर्णं दत्तं तारुण्यं यौवनं य(स्मै येन वा ? स्यै) वृद्धायै । ज्योत्स्नया सुधामय्या जरापलितनाशः मधुना माधुर्योत्पादनम् ।

**आक्षेप** इति । वक्तुमिष्टस्याप्यर्थस्य विशेषाभिधित्सया निषेधरूपः । **पञ्चत्रिंशदिति** । वाक्यप्रकाशतायामष्टादश पदप्रकाशत्वे सप्तदशेति ।

**प्रबन्धेऽपीति** । यदाह —

"अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः ।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ॥"

इति ।

---

१. 'चाभि' क. पाठः. २. 'त्युत्थस्तु' ख. पाठः. ३. 'दे — अ' क. पाठः.

अलं स्थित्वा श्मशानेऽस्मिन्[1] गृध्रगोमायुसङ्कुले[2] ।

कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥

नचेह जीवितः कश्चित् कालधर्ममुपागतः[3] ।

प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥

इति दिवाप्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ,

आदित्योऽयं स्थितो मूढाः! स्नेहं कुरुत साम्प्रतम्[4] ।

बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥

अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।

गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशङ्किताः ॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं चेति प्रबन्ध एव प्रथते । अन्ये त्वेकादश भेदा ग्रन्थविस्तरभया-

सम्प्रदायप्रकाशिनी

अलं स्थित्वेति । गृध्रगोमायुसङ्कुलत्वं स्थितिनिवर्तने हेतुः । पुरुषविसर्जनेति । मृतपुरुषविसर्जनपरत्वं ह्यत्र प्रतीयते ।

अथ गोमायोः — आदित्योऽयमिति । बहुविघ्न इति जीवितस्य प्रत्यागमनशङ्कोत्थाप्यते ।

निशीति । गोमायुर्हि निशि गृध्रमभिभवितुं क्षमते । अत्र युगविशेषस्य दिव्यानुभावशालित्वाद् गृध्रगोमायुसंवादः स्वतस्सम्भवी नतु प्रौढोक्तिकल्पितः । प्रबन्धेऽपीत्यपिशब्द उक्तसमुच्चयपर

साहित्यचूडामणिः

कालधर्मो मरणम् । जीवितः प्रत्युज्जीवितः ।

दिवाप्रभवतः दिवसे बहिःसञ्चारसमर्थस्य । पुरुषाणां व्यावर्तने तात्पर्यवद् वचनम् इष्टस्येवानिष्टस्यापि प्रत्यूहोऽस्तीति ।

प्रबन्ध एवेति । पद्यते गम्यतेऽनेनार्थ इति पदं सुप्तिङन्तम्; एकार्थ-

१. 'न इ' क. पाठः. २. 'के ॥ नं', ३. 'तः । इति' मूलकोशपाठः ४. 'बालक' ॥ क. पाठः.

न्नोदाहृताः, स्वयं तु लक्ष्यतोऽनुसर्तव्याः। अपिशब्दात् पद-वाक्ययोः ॥ १९ ॥

सम्प्रदायप्रकाशिनी

इत्याह — अपिशब्दादिति ॥ १९ ॥

साहित्यचूडामणिः

परः पदसमूहो वाक्यं, प्रबन्धान्तरवान्तरवाक्यं[1] प्रकरणं, विधिनिषेधावेगतिहे-तुकं[2] महावाक्यं प्रबन्धः, तत्रैव प्रकाशते इति। एतत् कविनिबद्धप्रौढोक्तिनि-ष्पन्ने वस्तुनि व्यङ्ग्यं वस्तु। अन्ये त्वेकादश भेदाः स्वयं लक्ष्यतः प्रेक्षणीयाः। तत्र वस्तुनालङ्कारो यथा—

*इअ अत्थिरसामत्थे अण्णस्स वि परिअणम्मि को आसंघो।
तत्थ वि णाम दहमुहो तस्स ठिओ एस पडिभडो मज्झ भुओ ॥

इति सुग्रीववाक्यानन्तरं

†किं अप्पणा परिअणो परस्स ओ परिअणेण दे पडिवक्खो।
सोहइ पत्थिज्जन्तो जिआहिमाणस्स किं जआम्मि वि गहणं ॥

इत्यादिजाम्बवद्वाक्यरूपे प्रबन्धे वस्तुना यो यो विमृश्यकारी स स जित-काशी यो यश्च नैवं स स नैवमित्यनुमानालङ्कारो व्यङ्ग्यः। अलङ्कारेण वस्तु यथा —

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च।
अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ॥

इति सिंहवाक्यानन्तरं,

क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥

इत्यादिदिलीपवाक्यरूपे[3] प्रबन्धे गुरुवचनानुपालनन्यासंरक्षणादिवैलक्षण्येन महापुरुषत्वलाभ इति काव्यलिङ्गेन पुत्रोत्पत्त्यादिकमैश्वर्यं प्रासङ्गिकं सिध्यतीति

१. 'न्तरमवा' क. ख. पाठः. २. 'वधिहेतुर्महा', ३. 'क्यत्र' ग. पाठः.

*इत्यस्थिरसामर्थ्येऽन्यस्यापि परिजने कोऽन्यवसायः।
तत्रापि नाम दशमुखस्तस्य स्थित एष प्रतिभटो मम भुजः ॥

†किमात्मना परिजनः परस्य उत परिजनेन ते प्रतिपक्षः।
शोभते प्रार्थ्यमानो जिताभिमानस्य किं जयेऽपि ग्रहणम् ॥

**पदैकदेशरचनावर्णेष्वपि रसादयः ।**

सम्प्रदायप्रकाशिनी

**अथ रसध्वनेः सम्भवान्तरमाह — पदैकदेशेति ।**

साहित्यचूडामणिः

वस्तु प्रकाश्यते । अलङ्कारेणालङ्कारो यथा —

धूमज्योतिस्सलिलमरुतां सन्निपातः क मेघः
सन्देशार्थाः क पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रणयकृपणाश्चेतनाचेतनेषु ॥

इत्यादिवचनानन्तरं,

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानन्यान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

इत्यादौ विरोधालङ्कारेण महापुरुषाणां कोपेऽपि न तद्भृत्या विपद्येरन्निति विशेषोक्तिर्व्यज्यते । इत्थमन्यदुन्नेयम् ॥ १९ ॥

इतोऽप्यलक्ष्यक्रमभेदान् कांश्चित् प्रदर्शयति — पदेति । एकदेश अवयवाः । रचना संघटना । वर्णान्यक्षराणि ।

"सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः ।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥"

इति ध्वनिदृशा बहुधा पदावयवाः । तत्र प्रत्ययात् पूर्वमुपादीयमाना प्रकृतिः, प्रकृतेः परं प्रयुज्यमानः प्रत्ययः । स्वादीनां प्रत्याहारः सुप्, तिबादीनां तिङ् । पूर्वत्र कारकाणि उत्तरत्र क्रिया । उक्तं हि —

"तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता"

इति । शक्तिसंख्याविभागकृत् प्रत्ययविशेषो विभक्तिः । स्वतन्त्रो हेतुः कर्ता । क्रिययाव्याप्यं कर्म । साधकतमं करणम् । सम्यगस्मै प्रदीयत इति सम्प्रदानम् । उक्तं च —

"अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥"

१. 'त्यत्र वि' ग. पाठः. २. 'न् प्र' क. ख. पाठः. ३. 'या व्याप्य' ग. पाठः. ४. 'नम् अ' क. ख. पाठः.

तत्र प्रकृत्या यथा —

रइकेळीहिअणिअसणकरकिसळअरुद्धणअणजुअळस्स ।
रुद्दस्स तइअणअणं पव्वइपरिचुम्बिअं जअइ ॥

सम्प्रदायप्रकाशिनी

पदैकदेशो हि प्रकृतिप्रत्ययात्मकतया द्विरूपः । तत्र प्राथम्यात् प्रकृतिप्रकाश्यमुदाहरति— रइकेळीति ।

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

साहित्यचूडामणिः

इति । अपायावधिरपादानम् । आधारोऽधिकरणम् । व्यतिरिक्तः शेषः । कारकाणां प्रवृत्तिविशेषः क्रिया, यां धात्वर्थमामनन्ति । क्रियैव[1] क्रियापरिच्छेदहेतुः कालः । वचनमेकत्वादि । प्रथममध्यमोत्तमाः पुरुषाः । पृथगर्थानामेकार्थीभावः समासः । प्रथमानिर्दिष्टं समास उपसर्जनं, यत् पूर्वं निपात्यते । भावकारकाभिधायिनो धातुप्रत्ययाः कृतः । भावकारकाभिसम्बन्धाभिधायित्वे सत्यधातुप्रत्ययास्तद्धिताः । अलिङ्गसंख्याशक्तीन्यव्ययानि । जात्यादिप्रवृत्तिनिमित्तानुपग्राहिणो[2]ऽसत्त्वभूतार्थाभिधायिनो लिङ्गसंख्याशक्तिशून्या उच्चावचार्थनिपातिनो निपाताः । समासयोग्या निपाता एव कतिपये गतयः । गतिविशेषा एव प्रादय उपसर्गाः । क्रियाजन्यसम्बन्धावच्छेदहेतवः कर्मप्रवचनीयाः,

"क्रियाविशेषजन्यानां सम्बन्धानां प्रकाशने ।
कर्मप्रवचनीयाः स्युर्निमित्तमवधारिताः ॥"

इत्युक्तत्वात् । अव्ययानि सुप्तिङन्तानुसारीणि विभक्तिप्रतिरूपकाणि । प्रकृतिप्रत्ययसमुदायस्य प्रकृत्यर्थविभागमुखेन भेदकं क्रियाविशेषणम् । शब्दस्य ताद्रूप्येणाभिधानमनुकरणम् । चादिनिपातद्योत्यः समुच्चयादिर्विशेष[3] इति पदावयवप्रपञ्चः । तत्र यथासम्भवमुदाहरति । प्रकृत्या यथा —

रईति ।

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

१. 'क्रियैव' ग. पाठः. २. 'नुग्राहि' क. ख. पाठः. ३. 'दिः शे' ख. पाठः.

अत्र जयतीति, नतु शोभत इत्यादि । समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव रूपेणास्य[1] नयनस्य[2] पिधानमिति तदेवोत्कृष्टम्[3] । तथा—

प्रेयान् सायमपाकृतः सशपथं[4] पादानतः कान्तया
 द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्यात्मना ।
तावत् प्रत्युत पाणिसम्पुटलसन्नीवीनिबन्धं धृतो
 धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥

---

सम्प्रदायप्रकाशिनी

अत्र प्रकृतेर्वैशिष्ट्यं दर्शयति—जयति, नतु शोभत इत्यादीति । तत्र को विशेष इत्यत आह—समानेऽपि हीत्यादि । लोकोत्तरेणैवेति । प्रस्तावोचितत्वाच्चुम्बनरूपस्य स्थगनस्य लोकोत्तरत्वम् । तिङ्प्रकृतेरुदाहरणमिदम् ।

सुप्प्रकृतेरुदाहरति—प्रेयान् सायमिति । पादानतोऽपि सशपथमपाकृतः सन् द्वित्राण्येव पदानि वासभवनाद् यावन्न निर्याति, तावन्न केवलमियमस्य प्रार्थनां विना प्रसन्ना प्रत्युत तं प्रार्थनया प्रसादितवतीत्याविष्कर्तुमुक्तं—प्रत्युत धृत इति ।

साहित्यचूडामणिः

इति । रतिकेलौ सम्भोगलीलायां हृतं निराकृतं निवसनं पार्वतीसम्बन्धि येन, करकिसलयाभ्यां पार्वतीसम्बन्धिभ्यां रुद्धमाच्छादितं नयनयुगलं सामान्यसिद्धं यस्येति । गमकत्वात् समासः । जयतीति, धातुरूपायाः प्रकृतेर्व्यञ्जकत्वम् ।

प्रत्ययांशव्यतिरेकेण प्रकृत्यंशं परिवर्तयति नत्विति । शोभा हि नेत्रत्रयसाधारणी । इदं हि सौभाग्यस्य सर्वस्वं, यत् प्रेयस्या स्वयं प्रियतमस्य लोचनपरिचुम्बनमित्याह— लोकोत्तरेणेति ।

प्रकृत्या एव प्रातिपदिकरूपाया उदाहरति—प्रेयानिति । आत्मनेति तस्य सौम्यदर्शनतया दुस्त्यजत्वं द्योत्यते प्रत्युतेति उक्तवैपरीत्येन तत एव कृतप्रणामकम् ।

---

१. 'स्य पि' ख. पाठः. २. 'स्या', ३. 'मिति । त', ४. 'थः' क. पाठः, ५. 'ने ही' ख. ग. पाठः. ६. 'सो' क. घ. पाठः

अत्र पदानीति नतु द्वाराणीति । तिङ्सुपोर्यथा—

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि च निवृत्ता मानिनीमानचर्चा ॥

अत्र किरतीति किरणस्य साध्यत्वं, निवृत्तेति निवर्तनस्य सिद्धत्वं तिङा सुपा च, तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते । यथा वा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।

सम्प्रदायप्रकाशिनी

नतु द्वाराणीति । पदात् पदान्तरसंचलनमपि विरहासहिष्णुतया न सोढमित्युक्ते यदौत्सुक्यं नहि तद् द्वारमित्युक्ते ।

अथ तिङ्सुपोः प्रत्यययोरुदाहरति—पथि पथीति । आभा प्रभा ।

अत्र किरतीत्यादि । लटा तिङ्प्रत्ययेन किरणव्यापारापरिसमाप्तिः, निवृत्तेति क्तेन सुप्प्रत्ययेन तत्कार्यभूतमानिनीमानानिवृत्तेरतीतत्वेन तदपेक्षया चिरसिद्धतेति शृङ्गारप्रकर्षः ।

लिखन्निति । एतत् तिङ्सुप्प्रत्ययान्तरोदाहरणम् ।

साहित्यचूडामणिः

पदानीति । द्वाराद्युपादाने कालाक्षमत्वलक्षणमौत्सुक्यमनुद्धुरीकृतं स्यात् । तिङ्सुपोरिति । द्वयोरेकत्रेति यावत् ।

नरि नरि पुंसि पुंसि । पुरि पुरि नगरे नगरे । मानिनीमानचर्चा मनस्विनीमानाभ्यासः । सुप्त्वेन सिद्धत्वे प्रतिपाद्यमानेऽपि भूयो भूत इत्यधिकारविहितेन क्तप्रत्ययेन मानिनीमानस्यातीतत्वं द्योत्यते ।

लिखन्निति । बहिर्वेदिकादौ । हसितं 'शुक! पादमरेर्देश' इति न्या-

१. 'ध्यमानत्वं' ख. पाठः. २. 'रादीनीति' ङ. पाठः. ३. 'क्तेः', ४. 'तमान' क. ख. पाठः. ५. 'द्धेति' ख. ग. पाठः. ६. 'न्तोदा' ख. पाठः, ७. 'भ्यु' क. ख. पाठः,

परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने! मानमधुना ॥

अत्र लिखन्निति नतु लिखतीति, तथास्त[1] इति नतु आसित इति[2] अपितु प्रसादपर्यन्तमास्त इति, भूमिमिति नतु भूमाविति नहि बुद्धिपूर्वकं किञ्चिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम् ।

गामारुह[3]म्मि गामे वसामि णअरट्ठिइं ण आणामि ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥

सम्प्रदायप्रकाशिनी

तद् विवृणोति — अत्र न लिखतीत्यादिना ।

गामारुहेति ।

ग्रामीणास्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥

साहित्यचूडामणिः

यात् । पठितं प्रसिद्धम् । इयमिति कण्ठगतप्राणा । अधुनालमतीतचिन्तया अद्यापि त्यज्यतामयं मानपिशाचः ।

न लिखतीति । लेखनमनूद्य प्रधानभूतमासनं विधत्त इति शत्रा प्रकाश्यते, यत्र लटो न पाटवम् । आस्त इति लङि निर्बन्धमाह — नत्विति । तत्त्वे गतो न वेति सन्देहः स्यात् । भूमिमिति द्वितीयातात्पर्यमाह — न त्विति । द्वितीयासप्तम्योः प्रतीतिभेदमाह — नहीति । भूमौ लिखन्नित्युक्तौ[4] भूमेरधिकरणतयोपलक्षिताया लेखनक्रियायाः कर्मावश्यंभावाच्च वृक्षं लिखन्नित्यादिवद् बुद्धिपूर्वकमाकारविशेषं लिखन्नित्यर्थः स्यात् । स चानुचितः नैश्चिन्त्यद्योतकत्वात् । भूमिं लिखन्निति चिन्ताकुलतया यत्किञ्चन रे[5]खामात्रमालिखन्नास्ते इत्यभिव्यनक्ति ।

गामा[6]रुहेति ।

ग्रामा[7]हास्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥

१. 'ति, अपितु प्रसादपर्यन्तमास्त इति, त', २. 'ति, भू' इति मूलकोशपाठः. ३. 'हं म्मि' क. पाठः. ४. 'ती' ग. पाठः. ५. 'ले', ६. 'रुहामीति' ग. पाठः. ७. 'मजास्मि मजातास्मि' ख. पाठः.

अत्र नागरिकाणामिति षष्ठ्याः।

'रमणीयः क्षत्रियकुमार आसीदि'ति कालस्य। एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः।

वचनस्य यथा—

ताणँ गुणग्गहणाणं ताणुक्कण्ठाणँ तस्स पेम्मस्स।
ताणँ भणिआणँ सुन्दर! ईरिसअं जाअमवसाणं॥

सम्प्रदायप्रकाशिनी

कयाचिद्[1] मत्सरिलया ग्राम्यासीत्यधिक्षिप्तायाः प्रतिनायिकाया उक्तिरेषा।

**षष्ठ्या** इति। प्राधान्यं निराकर्तव्यत्वेन व्यङ्ग्यमित्यर्थः। व्यासे[3] प्राधान्यं प्रतीयत इति भविष्यति।

**रमणीय** इति कालस्य, आसीदिति लङ्वाच्यस्य। तस्यानद्यतनतालक्षणं[4] विशेषमाविष्कर्तुमाह— **एषा[5] हि भग्नेत्यादिना**। भार्गवो हि नाद्य क्षत्रियाः क्षितौ सन्तीत्यवर्तिष्ट।

**ताणँ गुणेति**।

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।**
**तेषां भणितानां सुन्दर! ईदृशं[6] जातमवसानम्॥**

साहित्यचूडामणिः

इति। या या नगरसंबन्धिनी सा सा ग्रामवर्तिन्यापि मया हृतभर्तृका क्रियेत।

षडर्थास्तिङन्तेन प्रकाश्यन्ते क्रिया कालः उपग्रहः साधनं संख्या पुरुषश्चेति। तत्रादिमं त्रयं प्रकृतिरभिधत्ते, अपरं प्रत्यय इति विवेकः। तत्र कालमुदाहरति— **रमणीय** इति। प्रकरणं शोधयति— **एषा हीति**। आसीदिति लङा मत्क्रोधगोचरस्य क्षत्रियवटोरित उपरि सद्भावस्याश्रद्धेयत्वामिति ध्वन्यते

**ताणेति**।

तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।
तेषां भणितानां सुन्दरेदृशं जातमवसानम्॥

इति।

१. 'द् सरल' क. ख. पाठः. २. 'ष्ठ्या प्रा', ३. 'सेन प्रा' ख. ग. पाठः. ४. 'नकालल' ग. पाठः. ५. 'षा भ' क. घ. पाठः ६. 'गू' क. घ. पाठः.

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यम् ।

पुरुषव्यत्ययस्य यथा —

रे रे चञ्चललोचनाञ्चितरुचे! चेतः! प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥

अत्र प्रहासः । पूर्वनिपातस्य यथा —

सम्प्रदायप्रकाशिनी

**अत्र गुणेति** । द्योत्यं वचनस्येत्यन्वयः । पुरुषस्तु[1] व्यत्ययेनावस्थितः क्वचिद् व्यञ्जक इत्याह — **पुरुषव्यत्ययस्य यथेति** ।

**रे रे चञ्चलेत्यादि** । चञ्चललोचनाञ्चितरुचे! कान्तासक्त! स्थिरप्रेमाणं स्थिरप्रेम्णा रक्षितं महिमानं विमुच्येत्यर्थः । **किं मन्ये विहरिष्यस इति** । विहारिष्य इति मन्यसे किं, न तथा विहरिष्यस इत्यर्थः । 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' (१. ४. १०६) इति पुरुषव्यत्ययः । तत्र[2] हेतुः — **एषा कण्ठत**(टे ः ट इ)**इत्यादि** ।

**अत्र प्रहास इति** । पुरुषव्यत्ययस्य द्योत्य इत्यनुषङ्गः । एषु[3]-

साहित्यचूडामणिः

बहुत्वमिति । गृह्यमाणानां गुणानां बाहुल्यादेकस्यापि बहुधा गृह्यमाणत्वाच्च । एकत्वमिति । प्रेम्णः सर्वकालमैकरूप्यात् ।

व्यत्ययरूपवैचित्र्यशालिनः प्रथममध्यमादेः पुरुषस्य यथा — रे रे इति । चेत इति संबुद्धिः । स्थिरप्रेमाणम् अक्षयानुग्रहं महिमानं सर्वभावैस्वभावतया महत्त्वभूतं परमेश्वरं प्रमुच्य । किं नृत्यसि चापलमाविष्करोषि, विहारिष्यामीति किं मन्यसे । अयमत्र पुरुषव्यत्ययः यदुत्तमे मध्यमो मध्यमे चोत्तम इति ।

व्यङ्ग्यार्थमाह — प्रहास इति 'प्रहासे चे—'त्यादिसूत्रात् ।

१. 'स्य', २. 'त्र एष हे' ग. पाठः. ३. 'एतेषु' ग. पाठः. ४. 'वनाम' क. ख. पाठः.

येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः।
ये क्ष्माशक्र! पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम्॥

अत्र पराक्रमस्य प्राधान्यं गम्यते। विभक्तिविशेषस्य यथा—

प्रथनाध्वनि धीर! धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्।
दिवसेन तु नृवर! भवानयुद्ध विधिसिद्धसाधुपदम्॥

सम्प्रदायप्रकाशिनी

दाहरणेषु वचनादिस्वार्थमुखात् प्रत्ययस्य व्यञ्जकता दर्शिता।

येषां दोर्बलमिति। येषां दोर्बलमेवेति इयदेव वाक्यम्। केवलमस्तीति शेषः। ये केवलबालिनः, ये च केवलनीतिशरणाः, उभयेऽपि हि ते दुर्बला एव। येषां पुनस्ते बलनीती समस्ते सम्भवतः ते भवादृशा दुर्लभा इत्यर्थः।

अत्र पराक्रमस्येति। इतरथा अल्पतराच्कत्वाद् नयस्य पूर्वनिपातः स्यात्।

प्रथनाध्वनीति। प्रथनं संग्रामः।

साहित्यचूडामणिः

येषामिति। दोर्बलमेव न तु नीतिबलम्। केवलेति। दोर्बलशून्यनीतिशरणैः। क्ष्माशक्र! भूपुरन्दर! ! भवादृशा न सन्त्येव। नियोगे लिङ्। यदि सन्ति द्वौ त्रयो वा। नयस्य पूर्वनिपातौचित्यम् अल्पाच्तरत्वात्। तथापि पराक्रमस्य क्षत्रियविषये प्राधान्याद् 'अभ्यर्हितं पूर्वमि'ति पूर्वनिपातः। विशेषलक्षणयोगाद् व्यत्यस्तसामान्यलक्षणत्वं विभक्तेर्विशेषः।

१. 'नरपा' क. पाठः. २. 'ये के' क. ख. घ. पाठः. ३. 'ये हि' ग. पाठः. ४. 'ल्पाच्तरत्वा' ख. पाठः. ५. 'चत्वा' क. घ. पाठः.

अत्र दिवसेनेत्यपवर्गे तृतीया फलप्राप्तिं द्योतयति ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात् कामं नवमिव रतिर्मालती माधवं यद्
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ॥

अत्रानुकम्पावृत्तेः करूपतद्धितस्य ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥

अत्र प्रशब्दस्योपसर्गस्य ।

---

सम्प्रदायप्रकाशिनी

अपवर्गे तृतीयेति । न पुनर्दिवसमित्यन्तसंयोगे द्वितीयावन्नैष्फल्यमिति भावः ।

भूयो भूय इति । दृष्ट्वा दृष्ट्वेति क्त्वाप्रत्ययस्योत्कण्ठापेक्षया पूर्वकालता ।

अत्रानुकम्पेति । अनुकम्पावृत्तेः अनुकम्पार्थस्य कप्रत्ययात्मनस्तद्धितस्येत्यर्थः ।

परिच्छेदेत्यादि । महामोहोपचये प्रकर्षेण विवेकध्वंसो हेतुः ।

साहित्यचूडामणिः

दिवसेनायुद्धेति तृतीयया अपवर्गः फलप्राप्तिरित्यर्थः । एवं दिवसमयोधीति 'कालाध्वनोरत्यन्तसंयोग' इति द्वितीयया विधुराणां क्लेशबाहुल्यमुन्मील्यते ।

अनुकम्पायां वृत्तिर्विधानं यस्य करूपस्य तद्धितस्य, मालत्यवस्थाद्योतकत्वात् ।

प्रशब्दस्येति । संस्कारपर्यन्तं विवेकप्रणाशस्य विवक्षितत्वात् ।

---

१. 'गाढ द्वि' क. ग. पाठः.

कृतं च गर्वाभिमुखं मनस्त्वया[1]
किमन्यदेवं निहताश्च नो द्विषः।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम् ॥

अत्र तुल्ययोगिताद्योतकस्य च इति निपातस्य।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद् यदि परं देवो न जानाति तम्।

सम्प्रदायप्रकाशिनी

कृतं चेति। त्वया गर्वाभिमुखं मनः कृतं च द्विषो निहता-श्चेति चकाराभ्यां कार्यकारणसमकालत्वलक्षणोऽतिशयो व्यज्यते।

रामोऽसाविति। को राम इति दशग्रीवेण पृष्टस्य चारस्योक्तिरेषा। रामोऽसाविति सर्वनाम्ना[2] लोकातिशा[3]यिनी प्रसिद्धिः। भुवनेष्विति प्रसिद्धेः सार्वत्रिकता। गुणैरिति प्रसिद्धिहेतोः श्लाघ्यता। परामिति, अत एव परत्वम्। अस्मदिति, राक्षसकुलस्यैव। यदि परं

साहित्यचूडामणिः

कृतं चेति। यत्रैव च क्षणे वर्णनीयमनसो गर्वाभिमुख्यं तत्रैव सर्वशत्रुविनाश इत्येवमर्थद्योतकस्य च इति निपातस्य। निपातानां वाचकत्वाभावेन द्योतकत्वात् पदैकदेशप्रायत्वमिति यावत्। तत्र च द्वित्राणामुपसर्गाणां निपातानां च प्रयोगो न्याय्यः नाधिकानाम्। तत्रोपसर्गाणां यथा—'प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् द्रागि'ति। सम्यगुच्चैर्विशेषेणेक्षणमिति विवक्षणात्। यथावा—'मनुष्यवृत्त्या समुपाचरन्तम्' इति। सम्यगुपांश्वा समन्ताच्चरन्तमिति विवक्षणात्। निपातानां यथा—'हा धिक्कष्टमहो क्व यामि शरणमि'ति।

राम इति। असाविति रामस्य प्रसिद्धत्वमद्वितीयत्वं च ध्वन्यते। भुवनेष्विति सार्वलौकिकप्रसिद्धत्वम्। गुणैरिति न पुनः कृत्रिमवैतालिकसङ्केतेन। गुणानां बहुमुखत्वं प्रथमानत्वं बहुवचनेन ध्वन्यते।

१. 'वि' ख. पाठः. २. 'म्नो' ख. ग. पाठः ३. 'श' घ. पाठः.

वन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहति-
श्रेणीभूतविशालसालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां, न त्वादिनि न मादिति, अपित्वस्मदित्यस्य सर्वाक्षेपिणः, भाग्यविपर्ययादिति अन्यथासम्पत्तिमुखेन नत्वभावमुखेनाभिधानस्य ।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥

सम्प्रदायप्रकाशिनी

द्रव इति परमप्रवृत्तता। तस्यास्य प्रसिद्धिं परमोद्वेगजननपूर्वकमनुस्मारयितुं वन्दीवेत्युक्तगर्थम्। विवरमेमकसद्भावात् स्वरसप्तकाविर्भावः ।

तरुणिमनीति । कलाम् एकदेशम् । किञ्चित् तरुणीभवतीत्यर्थः । अग्र इति । पाठक्रियायामग्रे क(र्मणि ? र्तरि) मदनधनुस्सकाशाद् भ्रूप्रान्तयोरेक्रिमाणमभ्यस्यतीत्यर्थः ।

साहित्यचूडामणिः

**असाविति** सर्वनाम्नस्तद्वचनस्यैकत्वस्य च। भुवनेषु गुणैरिति प्रातिपदिकयोस्तद्वचनयोर्बहुवचनयोश्च। संभूय सैर्वेषां बहुवचनम्। सर्वाक्षेपिणः एकैकव्यतिरेकात् सर्वराक्षसक्रोडीकरणक्षमस्य। **भाग्यविपर्ययादिति**। नखल्वत्र भाग्यस्य प्रागभावः अपितु बुद्धिपूर्वकमागृहीतैरस्माभिः प्रध्वंसः प्रस्तूयते। यदि मैथिलीप्रत्यर्पणादाग्रहमत्यक्ष्याम सुखिनस्तदभविष्यामेत्याह —**अन्यथेति** । मुखमुपायः। अभिधानस्यैवंविधस्य निर्देशस्य व्यञ्जकत्वम् ।

अथ विप्रतिपत्तिविषयमुदाहरति — **तरुणिमनीति** । एतेषां स्वरूपश्रवणमेव शुष्कशैब्दविलक्षणं रसाभिव्यञ्जकम्। तरुणत्व इति त्वान्तादिमनिजन्तस्य मदनधनुषः समीप इति वाक्यादव्ययीभावस्य मौलौ वसतीत्यधि-

१ 'रम्र', २. 'संभवात्' ख. पाठः. ३. 'पू' ग.पाठः, ४. 'शाब्दवि' ख. पाठः,

अत्रेमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य । तरुणत्व इति धनुषः समीप इति मौलौ वसतीत्यादिभिस्तुल्येऽप्येषां वाचकत्वेऽस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति । एवमन्येषामपि बोद्धव्यम् । वर्णरचनानां[1] व्यञ्जकत्वं गुणस्वरूपनिरूपणे[2] उदा-

सम्प्रदायप्रकाशिनी

कर्मभूताधारस्येति[3] । 'उपान्वध्याङ्—'(१. ४. ४८) इत्यादिना कर्मतां नीतस्याधिकरणस्येत्यर्थः । नन्वेषां त्वादिभ्यः को विशेष इत्यत आह—तरुणत्वं इतीत्यादि । कश्चिदिति । निर्वक्तुमशक्यः सहृदयैकसंवेद्यः स एवातिशयो व्यञ्जकत्वं(प्राप्नोतीत्यर्थः) । अथावसरप्राप्तोऽप्यर्थः प्रस्तावान्तर उपयोक्ष्यत इत्याह—वर्णरच-

साहित्यचूडामणिः

करणप्रयोगान्मौलिमिति कर्मप्रयोगस्य च चमत्कारकारित्वम् । अत्र महिमा विप्रतिपद्यते । तेन हि विधेयाविमर्शे निर्णीतम्, अव्ययीभावे यथा—

"सा दयितस्य समीपे नावस्थातुं न चलितुमुत्सहते"

इत्यत्र दयितस्येति संबन्धितया यत् समीपस्य विशेषण तत् तस्य सुकृतशतलभ्यतालक्षणमुत्कर्षमादधदुद्दीपने पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नोपदयितमिति समीपार्थेनाव्ययेन सह समासेऽवसादं गमितामिति ।

तदिदमाग्रहाधिक्यमित्याकूतवानाह—अस्तीति । यस्मादव्ययीभावबन्धच्छाया सहृदयैरुपलाल्यते । एवमिति । तत्रोपग्रहस्य यथा ममैव—

"अभुञ्जत भुवं प्राञ्चो देव! बाहुर्भुनक्ति ते ।
राजवत्यो यतस्तेषां राजन्वत्यस्तु ते प्रजाः ॥"

इति । अन्ये राजानो भुवं करादानादभ्यवहरन्ति वर्णनीयस्तु पालयति । 'भुजोऽनवन' इत्यात्मनेपदविधानात् । एवं राजवत्योऽन्येषां प्रजाः वर्णनीयस्य राजन्वत्यः । 'राजन्वान् सौराज्ये' इति सूत्रितत्वात् । इत्थं च

१. 'नां गु', २. 'णे व्यञ्जकत्वमुदा' क. पाठः. ३. 'ति । अधिशीङ्स्था' ख. ग. पाठः. ४. 'त्व इत्यादि' ग. पाठः. ५. 'व्यज्यते ।' क. पाठः. ६. 'म्ना', ७. 'पा' ख. पाठः.

हरिष्यते । अपिशब्दात् प्रबन्धेषु नाटकादिषु । एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड् भेदाः ।

भेदास्तदेकपञ्चाशत्

व्याख्याताः ।

---

सम्प्रदायप्रकाशिनी

नानामित्यादि । अपिशब्देनोक्तसमुच्चयं दर्शयति — अपिशब्दादिति । रत्नावल्यादिना हि शृङ्गार एव । वेणीसंहारादिना वीर एव । पूर्वगणितभेदाभ्यामिति । पदवाक्यप्रकाश्यौ पूर्वभेदौ ।

अथ शुद्धभेदान् निगमयति — भेदास्तदिति । तथाहि — अविवक्षितवाच्यस्तावद् द्विरूपः अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति । विवक्षितान्यपरवाच्येषु असंलक्ष्यक्रम एकः, संलक्ष्यक्रमः शब्दशक्तिमूलो वस्त्वनुरूपोऽलङ्काररूपश्चेति द्विधा, अर्थशक्तिमूलो द्वादशात्मकः, उभयशक्तिमूल एक इति वाक्यप्रकाश्या अष्टादश । उभयशक्तिमूलमन्तरेणान्ये पदप्रकाश्याश्चेति पञ्चत्रिंशत् । अर्थशक्तिमूलः प्रबन्धप्रकाश्योऽपीति सप्तचत्वारिंशत् । रसादयस्तु पदैकदेशेन रचनया वर्णैः प्रबन्धेन च प्रकाश्यन्त इत्येकपञ्चाशच्छुद्धा भेदाः ।

साहित्यचूडामणिः

"यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।
वाक्ये संघटनायां च प्रबन्धेऽपि स दीप्यते ॥"

इति ध्वनिदृशा पदैकदेशव्यञ्जकत्वमुक्तम् । रचनावर्णयोस्तु कथमित्यत्राह — वर्णेति । गुणनिरूपणस्य वर्णरचनाविचारव्यतिरेकेण कर्तुमशक्यत्वादष्टम उल्लासे तत्प्रपञ्चनौचित्यम् । अथासाधारणानलक्ष्यक्रमभेदान् परिगणयति — एवमिति । पूर्वेति । पदवाक्यविषयाभ्याम् । षडिति । वर्णपदैकदेशपदवाक्यप्रबन्धसंघटनासु विद्यमानत्वात् ।

अथोक्तान् ध्वनिभेदानुपसंहरति — भेदा इति । पञ्चत्रिंशदनन्तरं प्रबन्धविषयस्य वाच्यशक्तिमूलस्य द्वादश, पदैकदेशरचनावर्णप्रबन्धविषयतया रसादेर्भूयोऽपि चत्वार इति षोडश, आहत्यैकपञ्चाशत् ।

---

१ 'स्तमानरू' र. ग. पाठः. २. 'क्य' ग. पाठः.

तेषां चान्योन्ययोजनम् ॥ २० ॥

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत् तेषां स्वप्रभेदैरेकपञ्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहक[2]-तयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन सङ्करेण परस्परनिर-पेक्ष[3]रूपयैकप्रकारया संसृष्ट्या चेति चतु[4]र्भिर्गुणने

वेदखाब्धिवियच्चन्द्राः (१०४०४)

सम्प्रदायप्रकाशिनी

अथ मिश्रभेदविवेचनं — तेषां चान्योन्येत्यादि । त्रिरूपेण द्वयोर्ध्वन्योः सन्देहास्पदत्वमनुग्राह्यानुग्राहकभावः एकव्यञ्जकानुप्रवेश-श्चेत्येवमात्मना सापेक्षत्वलक्षणेन सङ्करेण, परस्परनिरपेक्षत्वलक्षणयैक-रूपया च संसृष्ट्या तेषां शुद्धभेदानामन्योन्ययोजनम् । कर्तव्यमिति शेषः ।

तथा तु योजने कृते इयन्तो भेदा भवन्तीत्याह — वेद-खाब्धीति । वेदाश्चत्वारः, खं शून्यम्, अब्धयश्चत्वारः, वियच्छू-न्यं, चन्द्र एक इति वैलोम्येन प्रस्तारक्रमः । अत्रायं योजनासं-प्रदायः — अत्रार्थान्तरसंक्रमितवाच्योऽर्थान्तरसंक्रमितवाच्यान्तरेण

साहित्यचूडामणिः

अथ सङ्करसंसृष्टी स्पष्टयति — तेषां चेति ।

सङ्करस्य त्रैरूप्यमाह — संशयेति । एकतरनिर्धारणे प्रमाणाभावात् सन्देहविषयतया, उपजीवकोपजीव्यत्वमनुग्राह्यानुग्राहकभावः, एकस्मिन्नस-हाये व्यञ्जके क्वचिदुभयोर्ध्वन्योरनुप्रवेश इति त्रिविधः सङ्करः । संसृष्टिं व्याचष्टे—परस्परेति ।

सङ्करे हि सर्वत्र मिथः सापेक्षत्वं, संसृष्टौ पुनरेतन्नास्ति, तस्मादेकप्र-कारतेति चतुर्गुणने सति फलितां संख्यां सङ्केतभाषयाह — वेदेति ।

१. 'स्वरूपप्र', २. 'कभावेनैक', ३. 'क्षया चैक', ४. 'तुर्गुणेन वे' क. पाठः. ५. 'णरूपयै' क. घ. पाठः. ६. 'च' ख. ग. पाठः. ७. 'व्यप्रजीवकत्व' क. ख. पाठः.

शुद्धभेदैः सह

शरेषुयुगखेन्दवः (१०४५५) ॥ २१ ॥

तत्र दिङ्मात्रमुदाह्रियते —

खणपाहुणिआ देअर! जाआए सुहअ! किं पि दे भणिआ ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥

सम्प्रदायप्रकाशिनी

त्रिधा संकीर्णेन संसृज्यते चैकधा । एवमत्यन्ततिरस्कृतवाच्यादिभिः सर्वैरेव सह त्रेधैकं संकीर्यते संसृज्यते चेति चतुरुत्तरद्विशतभावमापद्यते । अनेनैव प्रकारेणात्यन्ततिरस्कृतवाच्यादिषु प्रत्येकमेकपञ्चाशता भेदैः सह संकरसंसृष्टिभ्यां चतुरुत्तरद्विशतभावमापद्यमानेषु वेदखाब्धित्रियचन्द्राः चतुरुत्तरचतुश्शताधिका दशसाहस्रिका मिश्रभेदानां भवन्ति ।

शुद्धभेदैरेकपञ्चाशता सह

शरेषुयुगखेन्दवः । शराः पञ्च, इषवश्च पञ्च, युगाश्चत्वारः, खं शून्यम्, इन्दुरेकः पञ्चपञ्चाशदुत्तरचतुश्शताधिका दशसहस्री ।

मिश्रभेदानिमान् शुद्धभेदज्ञानेनैव सुज्ञातत्वादति विततत्वाच्च दिङ्मात्रेणोदाहरति — खणपाहुणिएति ।

क्षणप्राघुणिका देवर! जायया सुभग! किमपि ते भणिता ।
रोदिति गृहपश्चाद्भा(गे । ग)वलभीगृहेऽनुनीयतां वराकी ॥

साहित्यचूडामणिः

एते हि सर्वे मिश्रभेदाः शुद्धभेदैः सह कियन्त इत्यत्राह — शरेति ।
दिङ्मात्रमिति । ग्रन्थगौरवप्रसङ्गात् ।
छणेति ।

उत्सवप्राभृतिका देवर! जायया सुभग! किमपि ते भणिता ।
रोदिति निष्कुटवलभीगृहेऽनुनीयतां वराकी ॥

इति । उत्सवव्याजेन गृहानीतविपक्षपक्ष्मलाक्षीकं देवरमुद्दिश्य प्रजावत्याः परि-

१. 'छ', २. 'सहस्री मि' ख. पाठः. ३. 'कः पूर्ववत् । मि' ग. पाठः. ४. 'हु', ५. 'शे कार्पासवलभीगृहे' ख. ग. पाठः.

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः, किमनुरणनन्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जक इति सन्देहः ।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि! धीरा भव ॥

सम्प्रदायप्रकाशिनी

क्षण उत्सवः । प्राघुणिका उत्सवार्थमाहूता बन्धुः । क्षणप्राघुंणिका तव जायया किमप्यनुचितमुक्ता गृहपश्चाद्भागे कार्पासनीरुजके(?) रोदिति तामिमामनुनयेत्यत्रानुनयो वक्तृबोद्धव्यपर्यालोचनयानुपयुज्यमानः सन् किमुपभोगेऽर्थान्तरे संक्रामति आहोस्विदनुरणनन्यायोदश्चितेन व्यञ्जनव्यापारेणोपभोगमेव व्यनक्तीति साधकबाधकाभावात् सन्देहः । नच सन्देहो दोष इति मन्तव्यम् । शोभातिशयप्रतिपत्तये प्रतिभोत्थापितत्वात् । स्वरसा एव हि सन्देहभ्रान्त्यादयो दोषाः ।

एवमर्थान्तरसंक्रमितवाच्यशब्दशक्तिमूलानुरणनरूपवस्तुध्वनी सङ्करत्वेनोदाहृत्यात्यन्ततिरस्कृतवाच्ययोः संसृष्टिमुदाहरति — स्निग्धश्यामलेति । वैदेही तु कथमिति । कान्ताभिनिवेशदार्ढ्यात्

साहित्यचूडामणिः

हासोक्तिः । अनुनीयतामिति यो ध्वनिः स किमविवक्षितवाच्यभेदयोरर्थान्तरसंक्रमितवाच्यः, उत विवक्षितान्यपरवाच्यभेदेषु संलक्ष्यक्रमे वाच्यशक्तिमूले वस्तुना वस्तु ध्वन्यते, इतिः प्रकारे, इति संशयः । तत्र जायया किमपि भणितेति भणनस्योपालम्भरूपस्य प्रजावतीकल्पनामात्रप्रवर्तितत्वे योग्यताभावेन मुख्यार्थभङ्गात् सामान्यविशेषभावात् सम्बन्धाद् रहस्यसंरक्षणलक्षणाच्च प्रयोजनादुपभोगरूपार्थान्तरसंक्रमणमनुनयस्य, अथानुरणनरूपत्वमिति संशयः ।

अथान्यत् सङ्करद्वयं संसृष्टिं चोदाहरति — स्निग्धेति । रामशब्दे ध्वनिविशेषावकाशप्रदानाय कठोरहृदयपदं, यथा — 'तद्गेहं नतभित्ती'त्यादौ

१. 'ह्न' ख. ग. पाठः. २. 'च्येषु भे' ग. पाठः.

अत्र लिप्तेति पयोदसुहृदामिति चात्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवा-

सम्प्रदायप्रकाशिनी

पुरोऽवस्थितामिवैनां मत्वाह — हहा हा देवीति।

अत्र संसृष्टिं दर्शयति — अत्र लिप्तेति पयोदसुहृदामिति चेति। लेपनसुहृत्त्वयोरनुपपत्त्यात्यन्ततिरस्कार इत्यनयोः संसृष्टिः। इत्थं संकीर्णतया संसृष्टतया वा मिश्रस्यापि पुनर्भेदान्तरैः सह सङ्करादिरूपं वैचित्र्यं सम्भवति। तदप्युन्नेयमित्यभिप्रेत्याह — ताभ्यां सह राम इत्यादि। रामोऽस्मीत्ययं हि दुःखैकायतनत्वाद्यर्थान्तरसंक्रमितवाच्यः। स हि लेपनसुहृत्त्वादिरूपेणोदीपनेनानुगृह्यत इति अनुग्राह्यानुग्राहकभावसङ्करोऽयम्। अथ राम इति योऽयमर्थान्तरसंक्रमितवाच्यः यश्च रामोऽस्मीति द्योतितो विप्रलम्भशृङ्गारस्तयोरेकव्यञ्जकानुप्रवेशः सङ्करः, उभयोरपि रामपदव्यङ्ग्यत्वादित्याह —

साहित्यचूडामणिः

तदित्युक्तेऽपि नतभित्तीत्यादि। यतो न गुणीभूतव्यङ्ग्यत्वशङ्का। उद्दीपनविभावोपोद्बलितविप्रलम्भः परस्पराधिष्ठानतया रतेर्विभावानां साधारण्यमभिमन्यमानस्ततः प्रभृति प्रियतमां हृदये निधाय व्यवहरन् स्मरणसरणिधारावाहिकया प्रत्यक्षीभावितां हृदयस्फोटनोन्मुखीं मुमुर्षीं ससंभ्रममाह — हहा हेति

उदाहरणानुरोधेन पूर्वं संसृष्टिमुपदर्शयति — लिप्तेति। लेपो मूर्तधर्मः तत्रापि चित्रफलकादौ न कदाचिद् गगनस्येति मुख्यार्थभङ्गः। उपरञ्जनातिशयो लक्ष्यः। कार्यकारणभावः सम्बन्धः। लिप्तं हि वस्तु गाढमुपरज्यते। वियतश्छायाधिक्यं व्यङ्ग्यम्। सुहृत्त्वं च कस्यचिन्महापुरुषस्य न सर्वस्येति मुख्यार्थभङ्गः। स्वभावसंवादो लक्ष्यः। सामान्यविशेषभावः सम्बन्धः, तद्विशेषत्वात् सौहार्दस्य। केकानां विरहपीडावहत्वं व्यङ्ग्यम्। एवमत्यन्ततिरस्कृतवाच्ययोरन्योन्यनिरपेक्षयोरैकाधिकरण्येन संसृष्टिः। अथ सङ्करयोस्तावदनुग्राह्यानुग्राहकभावमुद्भावयति — आभ्यामिति। लिप्तपयोदसुहृल्लक्षणाभ्यां सह रामोऽस्मीत्यस्यानुग्राह्यत्वमुपजीवकता। तयोः पुनरनुग्राहकत्वमुपजीव्य-

१. 'ति च। ले' ख. ग. पाठः. २. 'या वा सं' क. घ. पाठः. ३. 'मेत्या' ख. पाठः. ४. 'ह्रारस्म' क. ग. पाठः. ५. 'स्फु' क. पाठः.

च्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करः । एवमन्यदप्युदाहार्यम् ॥ २०,२१ ॥

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम

चतुर्थ उल्लासः ।

---

सम्प्रदायप्रकाशिनी

**रामपदलक्षणैकव्यञ्जकेत्यादिना** । **एवमन्यदिति** । यथेह त्रिविधः सङ्करः संसृष्टिश्चार्थान्तरसंक्रमितवाच्यादिध्वनिविषयतयोदाह्रियते, त-

साहित्यचूडामणिः

ता । तथाहि उद्दीपनविभावसंरम्भानुद्भवे सहिष्णुतातिशयलक्षणस्य हृदयकाठिन्यस्य वक्तुमशक्यत्वं, प्रावृषेण्यं विशेषमवलम्ब्य विप्रलम्भवर्णनौचित्यं चेति । अथ तृतीयं सङ्करमुल्लिङ्गयति— **रामेति** । रामोऽस्मीति स्ववचनेन बाधितमुख्यार्थो रामशब्दः कलत्रभ्रंशादिदुःखसहिष्णुत्वं लक्षयति । आधाराधेयभावः सम्बन्धः । जीवितस्य न कदाचिद् अत्याहितशङ्केति व्यङ्ग्यम् । एवं रामपदलक्षणमेकं व्यञ्जकमनुप्रविश्य तदीयस्यार्थान्तरसंक्रमितवाच्यस्य महावाक्यार्थरूपस्य रसध्वनेश्च सङ्करः । एकस्मिन् शब्दार्थयुगलात्मनि व्यञ्जकेऽनुप्रविष्टत्वादन्योन्यसापेक्षतेति सङ्करस्यास्य संसृष्टेर्वैलक्षण्यम् । **एवमिति** । तथाह्यत्रैव यथोक्तविशेषणाघटनादयः । कामं सन्त्विति समुच्चयेन तथापि कठोरहृदयोऽस्मीति विशेषोक्तिर्व्यज्यते, मरणसामग्र्यामपि मरणाभावस्वभावस्य कठोरहृदयत्वस्य भावात् । तया च वैदेही तु कथं भविष्यतीति वस्तुव्यङ्ग्यो व्यतिरेकालङ्कारः सङ्कीर्यते । यत्रानुग्राह्यानुग्राहकभावः रामोऽस्मि सर्वं सह इति काव्यलिङ्गव्यङ्ग्यस्य सीताप्रत्यक्षायमाणत्वनिबन्धनस्य भाविकस्य पर्यायोक्तस्य च संशयगोचरः सङ्करः । अनुग्राह्यानुग्राहकभावशालिनः संशयविषयस्य च ध्वन्योरन्योन्यसंसृष्टिः । कथं भविष्यतीति धीरा भवेति पदैकदेशलक्षणयोर्लृङ्लोटोरुपजीव्योपजीवकभावेन सङ्कर इति । यथावा ममैव —

"सौभाग्याय नमस्तवास्तु यदयं त्वत्कल्पमन्यं जनं
धत्ते वक्षसि वल्लभो घटयति भ्रातैव ते कौस्तुभः ।

---

१. 'च्यध्व' क घ. पाठः.

सम्प्रदायप्रकाशिनी

थास्य ध्वन्यन्तरविषयतया सर्वमुदाहरणतोऽवधार्यमित्यर्थः॥२०,२१॥

अलौकिकं गभीरं च प्रमेयमतिविस्तृतम् ।
यच्चतुर्थे तदस्माभिर्हस्तमुक्तामणीकृतम् ॥
प्रासङ्गिकमिहावोचन् सान्धिविग्रहिको बहु ।
व्याख्येयवस्तुनिष्कर्षः श्रीविद्याचक्रवर्तिनि ॥

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-
पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्य-
काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-
योगीश्वरश्रीमत्त्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकवि-
श्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्यां
काव्यप्रकाशबृहट्टीकायां
चतुर्थ उल्लासः ।

---

साहित्यचूडामणिः

इत्यालीपरिहाससंभृतरुपं संलक्ष्य लक्ष्मीं प्रिया-
माकल्पानवधीरयन्नवतु वो देवः पुराणः पुमान् ॥"

इति । अत्र सौभाग्याय नम इति वस्तुनोपालम्भो व्यज्यते ।यत्र नमःपदस्यौ-ल्बण्यम् । तस्य चानुग्राह्यस्य कौस्तुभो घटयतीति वस्तुव्यङ्ग्येन लक्ष्मीप्रति-बिम्बनध्वनिनानुग्राहकेण सङ्करः । आर्तैवेति शब्दशक्तिसमुद्भवस्य नायिकाह-ङ्कारभङ्गस्य व्यङ्ग्यस्य प्रतिबिम्बलाभादालीपरिहास[1] इत्यर्थशक्तिसमुत्थितस्य काव्यलिङ्गस्य च पूर्ववत् सङ्करः । क्वचित् संशयविषयतया च पार्यते निर्वोढुम् । सर्वैश्चामीभिर्भावस्य भगवद्गोचरायाः कविसम्बन्धिन्या रतेः सङ्करः । अवधीरयन्नित्यत्र तेषामेव व्यञ्जकता।न्तं[2] निमज्जनमिति सिद्धम् ॥ २०,२१ ॥

इयमवहितचेतश्चातुरीचर्वणीया प्रसरतु सरसा वः श्रेयसी काव्यरेखा ।
प्रचुरसुकृतचर्याशालिनो यां लभन्ते प्रभवति भुवनेऽस्मिन् पञ्चषाः प्राज्ञ एव ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां
चतुर्थ उल्लासः ।

---

१. 'सङ्करवि', २. 'नामि' ग. पाठः.

## अथ पञ्चम उल्लासः ।

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यस्य प्रभेदानाह—

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ १ ॥**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।**

कामिनीकुचकलशवद् गूढं चमत्करोति । अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव । अगूढं यथा—

---

सम्प्रदायप्रकाशिनी

### अथ पञ्चम उल्लासः ।

उल्लासयोः सङ्गतिमाह—एवं ध्वनाविति ।

अगूढमपरेत्यादि । स्मृताः ध्वन्याचार्येण । यद्धि[1] वाच्यातिशायित्वेन निर्णीतं वस्त्वलङ्कारादिरूपं सावान्तरप्रभेदं व्यङ्ग्यं तद् यदा अगूढत्वादिना निमित्तेन गुणीभावं नीयते तदा अगूढव्यङ्ग्यमपराङ्गव्यङ्ग्यं वाच्यसिद्ध्यङ्गव्यङ्ग्यमस्फुटव्यङ्ग्यं सन्दिग्धप्राधान्यव्यङ्ग्यं तुल्यप्राधान्यव्यङ्ग्यं काक्वाक्षिप्तव्यङ्ग्यमसुन्दरव्यङ्ग्यमिति गुणीभूतव्यङ्ग्याख्यस्य मध्यमकाव्यस्य भेदाष्टकमुन्मीलयतीति कारिकार्थः ।

तदेतद् व्याचष्टे[2]—कामिनीकुचकलशवदित्यादिना । वाच्यायमानमितीति । इतिर्हेतौ । स्फुटायमानत्वाद् वाच्यकल्पस्य

साहित्यचूडामणिः

### अथ पञ्चम उल्लासः ।

नौमि सौम्यसमस्ताङ्गीं नित्यशुद्धां सरस्वतीम् ।
त्रैलोक्यसौधकूटस्य स्फाटिकीं सालभञ्जिकाम् ॥

उल्लाससङ्गतिमाह —**एवमिति** ।

उद्दिशति —**अगूढमिति**[3] । **एवमिति** । व्यङ्ग्यार्थस्वभावाधीनोऽयं[4] काव्यभेदः ।

कोऽयं व्यङ्ग्यस्य गूढतायां निर्बन्ध इत्याह —**कामिनीति** । अगूढतायामनौचित्यमाह —**अगूढं त्विति** । वाच्यायमानं वाच्यवदाचरत् । तद्वा

---

१. 'सु', २. 'मिति' ख. ग पाठः. ३. 'ति । व्य' क. ख. पाठः. ४. 'सी' ग. पाठः.

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यथाव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न सम्प्रति भवामि किमालपामि ॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य ।

सम्प्रदायप्रकाशिनी

गुणीभाव एव । अगूढं यथेति । साहचर्येणोद्दिष्टस्य प्रतियोगिनो गूढस्य व्यावृत्त्यर्थमगूढमिति प्रकृतस्य सतोऽपि पुनरुपादानम् ।

यस्यासुहृदिति । कृततिरस्कृतिः, कृता तिरस्कृतिरनेनेति विग्रहः । जीवन्न भवामि न जीवामीत्यर्थः । अत्र जीवत एव न जीवामीत्युक्तिर्मरणसध्रीचीनैर्दारुणदुःखरूपे स्फुटतरे अर्थान्तरे संक्रामति । अतोऽर्थान्तरसंक्रमितवाच्यस्येहागूढता ।

साहित्यचूडामणिः

तादृग्वेति न कश्चिद् विशेषः । यदाह —

"संवृत्याभिहितं वस्तु यत्रालङ्कार एव वा ।
काव्याध्वनि ध्वनिर्व्यङ्ग्यप्राधान्यैकनिबन्धनः ॥"

इति ।

"मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैव भूषा लज्जेव योषिताम् ॥"

इत्युपमयाप्येतत् प्रकाश्यते। गोपनासारसौन्दर्यानुप्राणनत्वं हि तत्र साधर्म्यम् ।

यस्येति । अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्यागूढत्वम् । स्ववचने बाधितमुख्यार्थं जीवत्त्वं पौरुषवत्तायां परिणमितम् । एकार्थसमवायः संबन्धः । बहिर्यात्रा विधेयेति व्यङ्ग्यम् । अस्य चागूढत्वं स्पष्टं वाच्यवन्निश्चमत्कारत्वात् । तद्वशाच्च तद्वतः काव्यस्य गुणीभूतव्यङ्ग्यत्वम् । वस्तुमात्रादित्रयेऽपि गुणीभूतव्यङ्ग्यत्वमस्ति । तद् यथायोगमवगन्तव्यम् ।

१. 'प्त्र' क. घ. पाठः. २. 'कृता', ३. 'ने' ख. ग. पाठः. ४. 'ताम् ॥ इति । इ' क. ख. पाठः. ५. 'नेन वा' ख. पाठः. ६. 'वकत्व' ग. पाठः. ७. 'त्व-मपे' क. पाठः.

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदा[1]भमुदयाचलचुम्बि बिम्बम् ॥

अत्र चुम्बीत्यत्यन्ततिरस्कृतवाच्यस्य ।

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।

सम्प्रदायप्रकाशिनी

उन्निद्रेति । अत्र चु[2]म्बीत्यतो बिम्बस्योदयाचलस्पर्शरूपमर्थान्तरं पर्यायकल्पतया प्रतीयत इत्यत्यन्ततिरस्कृतवाच्यस्ये[3]हागूढता ।

अत्रासीदिति । इहायोध्यां प्र[4]ति प्र[5]तिप्रयाणे समनन्तरव्यापादि[6]तदशाननस्य दिव्ययानेन सञ्चरमाणस्य सीतां प्रति दाशरथेः समरभूमिनिर्देशाभिन[7]य[8]व्यञ्जिकोक्तिः । अत्र दशास्यनिपातनेन राम-

साहित्यचूडामणिः

उन्निद्रेति । चुम्बनं हि कामिमिथुनादिविषयो वक्त्रसंयोगः । तदचेतनानां न सम्पद्यते, दूरे शैलशृङ्गसूर्यबिम्बयोरित्यत्यन्ततिरस्कारः । तेन च संयोगमात्रं लक्ष्यते, सामान्यविशेषभावः सम्बन्धः । कालावस्थानिवेदनं व्यङ्ग्यम् । तच्च वाच्यायमानत्वादगूढम् । यदाह —

"अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः ॥"

इति । इतरथा नेयार्थत्वं गुणीभूतव्यङ्ग्यता वेति कारिकार्थः ।

---

१. 'टा' क. पाठः. २. 'म्बतीत्य' क. ख. ग. घ. पाठः. ३. 'स्यागू', ४. 'ति प्रया' ख. ग. पाठः. ५. 'तियाने स' घ. पाठः. ६. 'यादिव्य' क. पाठः. ७. 'शास्यस्य', ८. 'यत्' ख. पाठः.

दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि! राक्षसपतेः कृत्ता च कण्ठाटवी॥

अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य[1]। तस्याप्यत्रेति युक्तः पाठः।

अपरस्य रसादेर्वाच्यस्य[2] वा वाक्यार्थीभूतस्याङ्गं रसादि अनुरणनरूपं वा।

---

सम्प्रदायप्रकाशिनी

भद्रसमाख्यामयांत्रिभुवर्नप्रस्तावे यत् कविना सीतां प्रति रामभद्रस्य योऽयं स्वनिर्देशः केनापीत्युपनिबद्धः तद् वाच्यादपि वाच्यतरायत इत्यर्थशक्तिमूलानुरणनरूपस्य वस्तुध्वनेरगूढता।

पाठान्तरप्रदर्शनेनागूढतां द्रढयति — तस्याप्यत्रेत्यादि।

अथापराङ्गव्यङ्ग्यविवेचनं प्रस्तौति— अपरस्य रसादेरित्यादिना। अपरशब्दविवक्षामुद्घाटयति —रसादेर्वाच्यस्य वेति। अत्र हि गुणीभूतव्यङ्ग्यस्य द्वौ प्रतियोगित्वेन विवक्षितौ रसादिरर्थः वाच्यो वाक्यार्थश्चेति। यच्चैतद् गुणीभूतव्यङ्ग्यं तदपि द्विरूपं रसादिकमनुरणनरूपं च। अनुरणनरूपमिति सामान्यस्य वक्ष्यमाणन्यायेन संकोचाद् वस्तुमूलस्यालङ्कारध्वनेरिहासम्भवः।

साहित्यचूडामणिः

विवक्षितान्यपरवाच्ये वाच्यशक्तिमूलानुरणनरूपमगूढमुदाहरति — अत्रेति। भवत्या देवरे लक्ष्मणे। मयाप्यत्रेति वाच्यभागे यद्वदात्मप्रशंसा- एवं केनाप्यत्रेति व्यङ्ग्येऽपीति तस्यागूढत्वम्।

उचितं पाठमाह—तस्यापीति। कण्ठाटवीकर्तने कर्तृविवक्षायामयं क्लेशः न पुनस्तत्सम्बन्धिनिर्देशे।

अपरस्याङ्गमित्यत्रापरशब्दं द्विधा व्याख्याति—रसादेरिति। आदि-

---

१. 'स्वान' इति मूलकोशपाठः. २. 'स्य वाक्या' ख. पाठः. ३. 'या' ४. 'नि', ५. 'भवतो व्य' ख. ग. पाठः. ६. 'मनद्याः' ग., 'भावन्य' घ. पाठः. ७. 'यावद्दा' ग. पाठः

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र शृङ्गारः करुणस्य ।

---

सम्प्रदायप्रकाशिनी

अथ रसवदादयोऽलङ्कारा गुणीभूतव्यङ्ग्याभिधाने वक्ष्यन्त इति यत् प्रतिज्ञातं तस्यायमवसर इत्यभिप्रेत्य क्रमेणोदाहरति — अयं स रशनेति । अयं स इति रणभूमिनिपतितस्य भूरिश्रवसो भुजप्रत्यभिज्ञा। रशनोत्कर्षी यो हि लौल्येन घणघणायमानमणिकङ्कणो मे रशनां ताच्छील्येनोदग्रथयत् सोऽयं, पीनस्तनविमर्दनः यो मे पीनौ स्तनौ पीनत्वादेव विशेषेणामृद्नात् सोऽयं य एवं[1] नाभिमूरुं जघनमप्यस्पृशत् सोऽयं, य एवं[2] चातिचपलो नीवीमप्यपातयत्[3] सोऽयमेवेदृशीं दशामनुप्रपन्न इति परित्यक्तलज्जं प्रियभुजमालिङ्ग्य विकलकिंवल रुदन्त्या भूरिश्रवसो धर्मपत्न्याः प्रलापोऽयम् । अत्र सम्भोगशृङ्गारः करुणं प्रति भृत्यभूयमापद्यते ।

साहित्यचूडामणिः

पदाद् भावादेः । वाच्यस्येत्येतावत्युक्ते पदार्थमात्रस्येति प्रतीयेत । तच्चानुचितम्, अङ्गित्वानुपपत्तेरित्याह — वाक्यार्थीभूतस्येति । अङ्गभूतस्यापि द्वैविध्यमाह — रसादीति । रसादेरङ्गं रसादि वाच्यस्याङ्गगनुरणनरूपम् । यदाह —

"व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥"

इति ।

तत्र रसस्याङ्गं रसमुदाहरति — अयमिति । प्रस्तुतकरुणौचित्यात् स इति स्मर्यमाणः शृङ्गारानुगुण्येन । एवं रसान्तरेऽपि द्रष्टव्यम् ।

---

१. 'वं' क. पाठः. २. 'वमर्ति' क. घ. पाठः. ३. 'पाकर्षत्' ख. ग. पाठः.

कैलासालयफाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्धाबन्धसमिद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकार[2]सरसा सद्यः समुत्सार्यते ॥

अत्र भावस्य रसः ।

---

सम्प्रदायप्रकाशिनी

कैलासालयेति । गिरिभुवो देव्याः शिवायाः सा पादनखद्युतिः असामान्यानुभावगरिमा पादाङ्गुलीनखद्युतिर्वः सदा त्रायतां युष्मानविरतमभिरक्षतु । सेत्युक्तम् । सा कीदृशी, कैलासालय[3]फाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः कैलासालयस्य शिवस्य फाललोचनरुचा प्रणयापराधप्रणतस्य ललाटनेत्रप्रभापटलेन निर्वर्तितालक्तकव्यक्तिः निष्पादितयावकरसरञ्जनाभिव्यक्तिः । अनेनोत्तरार्धोपनिबध्यमानस्योत्प्रेक्षालङ्कारस्य सामग्री सम्पादिता । यया एतया स्पर्धाबन्धसमिद्धयेव नेत्रकान्त्यभ्यसूयया ज्वलन्त्येव सुदृढं रूढा दृढतरं प्ररूढा अत एव कोकनदानुकारसरसा रक्तारविन्दसंवर्तिकासदृशत्वात् सुकुमारा सद्यस्समुत्सार्यते अविलम्बमपनीयते। शिवे प्रणमति प्रसन्ना देवीति वाक्यार्थः। अत्र मानोपबृंहितः सम्भोगशृङ्गारो देवताविषयस्य रतिभावस्याङ्गम्। अतो रसवदलङ्कारो द्विधोदाहृतः पूर्वोदाहरणे रसाङ्गतया इह तु भावाङ्गतयेति ।

साहित्यचूडामणिः

अथ भावस्याङ्गं रसमाह — कैलासालयेति । कैलासालयः परमेश्वरः । स्पर्धाबन्ध आरुण्यजातीयत्वादीर्ष्यानुवृत्तिः, तेन दीप्तयेव ।

भावस्य रस इति । कविसम्बन्धिन्याः पार्वतीगोचराया रतेरङ्गमीर्ष्याविप्रलम्भः ।

---

१. 'द्ध' क. पाठः. २. 'सा' ख. पाठः ३. 'यस्य' ग. पाठः.

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद् भुव-
स्तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

वन्दीकृत्य नृप ! द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।

---

सम्प्रदायप्रकाशिनी

अथ प्रेयोलङ्कारोदाहरणम्—अत्युच्चा इति। तथा तेऽपि परितः स्फुरन्तीत्यर्थः । इत्याश्चर्येणेति समन्वयः । अत्र भूविषयस्य भावस्य राजविषयभावाङ्गतया प्रेयस्त्वम् । एवं रसाङ्गतयोदाहर्तव्यम् । यथा 'त्वं मुग्धाक्षी'त्यादौ सखीनां नायिकाविषयो रतिभावः शृङ्गारस्य । इत्थं प्रेयानपि द्विधा ।

अथोर्जस्विसमाहितालङ्कारावेकश्लोकेनोदाहरति—वन्दीकृत्ये-ति। भो नृप! ते सैनिकाः द्विषां मृगदृशो वन्दीकृत्य परितः श्लिष्यन्ति सोपहासं प्रणमन्ति केशाञ्चलादिषु बलाद् गृह्णन्ति। पश्यतामित्यनादरे षष्ठी । पश्यत एव द्विषोऽनादृत्येत्यर्थः । तैः प्रत्यर्थिभिस्तु सुकृतशतेन

साहित्यचूडामणिः

अथ भावस्याङ्गभावमुदाहरति— अत्युच्चा इति । तान् प्रागुपन्य-स्तान् गिरीन् । एतान् अनन्तरोक्तान् अम्बुधींश्च । भूविषयो भावः कविस-म्बन्धी तस्यैव राजविषयस्याङ्गमिति भावो भावस्याङ्गम् ।

अथ भावस्य रसभावाभासाङ्गमुदाहरति— वन्दीकृत्येति । नृपेति संबुद्धिः। पश्यतामित्यनादरे षष्ठी। तदिति। यस्मादस्माकं दृशोर्निपतितोऽसि।

"वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।
तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥"

अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे!
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥

अत्र भावस्य रसाभासभावाभासौ प्रथमद्वितीयार्धद्योत्यौ ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥

---

सम्प्रदायप्रकाशिनी

दृष्टोऽसि त्वद्दर्शनेन विध्वस्तविपदो वयमभूमेति स्तूयस इत्यत्र सैनिकानां यः सम्भोगशृङ्गाराभासः, यश्च द्विषां वर्ण्यनायकविषयो भावाभासस्तावुभावपि नायकविषयस्योपश्लोकयितृरतिभावस्याङ्गम् । अतो रसाभास इहोर्जस्वि, भावाभासः समाहित इति ज्ञेयम् ।

अथ भावशान्त्यादीनामपि गुणीभावेनालङ्कारता — अविरलेति । कम्पनैरित्यादिरुपलक्षणे तृतीया । तदुपलक्षितो मदस्तवेक्षणे सति क्षणात् क्वापि गत इति मदरूपभावप्रशमो नायकविषयोपवर्णयितृरतिभावस्याङ्गमित्यलङ्कार एव ।

साहित्यचूडामणिः

इति नीत्या श्लाघनीयवंशादिकानां नायकपरिपन्थिनामसूर्यंपश्येषु शुद्धान्तेषु सैनिकैः परामर्शस्यानौचित्यप्रवृत्तत्वात् पूर्वत्रार्धे रसाभासः । उत्तरत्र तु कृच्छ्रगतैः परपुरुषैर्विपक्षस्तुतावनौचित्याद् भावाभासः । उभयं कविसम्बन्धिनो भावस्य राजविषयस्याङ्गम् ।

अथ भावस्याङ्गं भावप्रशममुदाहरति —अविरलेति । वैरिणां चापलहर्षादिनान्तरीयकस्य मदस्य गर्वस्य व्यङ्ग्यस्य प्रशमो वर्णनीयविषयरतिरूपस्य भावस्याङ्गम् । एषु च रसवदाद्यलङ्कारव्यपदेश इत्यनन्तरमुद्घाटयिष्यते ।

अत्र भावप्रशमः ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो! गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥

अत्र त्रासस्योदयः।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

---

सम्प्रदायप्रकाशिनी

**साकं कुरङ्गकेति** । सुहृद्भिर्वधूभिश्चापि साकं मधुपानाय प्रवृत्ते वैरिणि केनचित् त्वत्सं[1]नामार्थान्तरप्रतिपादनायापि त्वन्नाम्नि गृहीते विषमावस्थाभूदिति योऽयं त्रासोदयः स रतिभावस्याङ्गम् ।

**असोढा तत्कालोल्लसदिति** । असहभावोऽशक्तता दौर्बल्यमित्यर्थः। तत्कालमुल्लसत्यविलम्बितमाविर्भवत्यसहभावो यत्र तस्य देव्युग्रतपसोऽसोढा। तां तथा शरीरनिरपेक्षं तपस्तप्यमानां सोढुमपारय-

साहित्यचूडामणिः

भावोदयमुदाहरति — साकमिति । केनापि परिजनादिना[2] । अन्याभिधायि यथा विश्वनाथशब्देन राजा परमेश्वरोऽप्युच्यते ।

असोढेति । तस्मिन्नुत्कटे काले उल्लसन्नसहभावो यस्य । अथ च तथापि । कपटवटुवेषापनयने कृत्रिमब्रह्मचारिनेपथ्यावधूनने । त्वराशैथिल्याभ्याम् आदरोपेक्षाभ्याम् । युगपद् एकदैवाक्रान्तः ।

---

१. 'समानार्थो', २. 'दिनापि' ख. ग. पाठः. ३. 'व्यास्तप' ख. ग. घ. पाठः. ४. 'यादिसु' ग. पाठः.

अत्रावेगधैर्ययोः सन्धिः ।

पश्येत् कश्चिच्चल चपल ! रे का त्वराहं कुमारी

हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।

---

सम्प्रदायप्रकाशिनी

त्रित्यनेन कपटवटुवेषापनयने त्वराहेतुरुक्तः । अथ शैलदुहितुः कथानां विस्रम्भे रमिक इति तु वेषापनयनमान्द्ये । युगपदभियुक्त इति वेषापनयनविपययोस्त्वरामान्द्ययोस्तुल्ययोगिता ।

अत्रावेगधैर्ययोरिति । आवेगस्त्वराभिव्यङ्ग्यः । धैर्यं शैथिल्याभिव्यङ्ग्यम् । सन्धिः सम्भूयवृत्तिता । स भावस्य गुणीभवति ।

पश्येत् कश्चिदिति । भोः पृथ्वीपते! भवद्विद्विषोऽरण्यवृत्तेः कन्या कश्चिदभिधत्ते एवमुक्तिप्रत्युक्तिपरिपाटीमारचयतीत्यर्थः । पश्येत् कश्चिदिति सन्त्रासनपरस्योक्तिः । त्वामरण्यवार्त्तिं कश्चित् पश्येदित्युक्ता तं प्रतिवक्ति—चल चपल! रे इति । यदि पश्येत् तर्हि चपल! एहि पलायावह इत्यर्थः । अथ तस्योपहासपरस्योक्तिः —का त्वरेति । अहो ते भीरुतेति यावत् । सा प्रत्याह—अहं कुमारीति । भीरोर्मे त्वरैव स्वभावः क इहोपहास इति यावत् । स पुनर्धौर्त्येनाह — हस्तालम्बं वितरेति । यदि त्वरया चलितव्यं तर्हि देहि हस्तालम्बमित्यु-

साहित्यचूडामणिः

आवेगधैर्ययोस्त्वराशैथिल्यशब्दद्वयव्यङ्ग्ययोः सन्धिः ।

पश्येत् कश्चिदिति शङ्का । चल चपल रे इत्यसूया । का त्वरेति धृतिः । अहं कुमारीति स्मृतिः । हस्तालम्बं वितरेति[4] श्रमः । हहहा व्युत्क्रम इति[5] विबोधः । क्वासीति दैन्यम् । यासीत्यौत्सुक्यम् । अमीषां शबलता राजविषयस्य रतिभावस्याङ्गम् ।

---

१ 'क्व प्रयामि' क. पाठः. २ 'वद्विद्विषो' क. ख. घ. ङ. पाठः. ३. 'नरौद्धत्येना' क. पाठः. ४. 'त्यौत्सुक्यम्', ५. 'ति श्रमः । क्वा' ख. पाठः.

इत्थं पृथ्वीपरिवृढ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाभिधत्ते ॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां[2][3] शबलता। एते च रसवदादयोऽलङ्काराः[4]। यद्यपि भावोदय-

सम्प्रदायप्रकाशिनी

क्वायाः प्रत्युत्तरं—हहहा व्युत्क्रम इति। हस्तालम्बं दातुमर्हः सन् कुतो मां याचस इत्यर्थः। अथ चलिते तत्र सैवाह—क्वासि यासीति। असीति त्वमर्थे निपातः।

अत्र शङ्कासूयेति। पश्येदित्यनेन हि वाक्येन शङ्काभिव्यज्यते। चल चपलेत्यसूया। का त्वरेति धृतिः। अहं कुमारीति स्मृतिः। हस्तालम्बमित्यौत्सुक्यम्। हहहेति श्रमदैन्ये। व्युत्क्रम इति विबोधः। क्वासि यासीत्यौत्सुक्यम्। अत्रैषां शबलता भावस्याङ्गम्। अथ रसवदादयोऽलङ्कारा वक्ष्यन्त इति यत् प्रतिज्ञातं तत् कृतमित्यनुस्मारयति—एते च रसवदादयोऽलङ्कारा इति। अतो रसभावादीनां यदा प्राधान्यं तदा ध्वनित्वं, यदा त्वङ्गभावस्तदालङ्कारत्वमेवेति सिद्धम्। ननु रसादिचतुष्टयस्य गुणीभावे रसवदाद्यलङ्कारत्वं प्रसिद्धं,

साहित्यचूडामणिः

त एते रसवदाद्यलङ्कारा इत्याह—एत इति। रसवत्प्रेयऊर्जस्विसमाहितादयः। रसोऽत्रास्तीति रसवत्। यदाहोद्भटः—

"रसवद् दर्शितस्पष्टशृङ्गारादिरसोदयम्"

इति। रत्या प्रियतयोपलक्षितं भाववृन्दमत्रास्तीति प्रेयस्वत्। तदुपचारात्[5] प्रेयोऽपि[6]। यदाह—

"रत्यादिकानां भावानामनुभावादिसूचनैः।
यत् काव्यं बध्यते सद्भिस्तत् प्रेयस्वदुदाहृतम्॥"

इति। ऊर्जसो बलस्य विद्यमानत्वादूर्जस्वि। बलयोगो ह्यनौचित्येन प्रवृत्तिः[7] यदाह—

१. 'तव द्वेषिणोऽर' क., 'भवद्वैरिणोऽर' ख. पाठः. २ 'त्यौत्सुक्यश्च', ३. 'भानां ख. पाठः. ४. 'दाद्यल' इति मूलकोशपाठः ५. 'प्र' क. पाठः. ६. 'उप', ७. 'वा' ख. पाठः.

भावसन्धिभावशबलत्वानि नालङ्कारतयोक्तानि, तथापि कश्चिद् ब्रूयादित्येवमुक्तम्। यद्यपि स नास्ति कश्चिद् विषयः

सम्प्रदायप्रकाशिनी

भावोदयादयस्तु नालङ्कारतया प्रसिद्धाः, तत् कथमेवमुक्तमित्यत आह—यद्यपि भावोदयेत्यादि। कश्चिद् ब्रूयादिति। उक्तं ह्यलङ्कारसर्वस्वकृता—"भावोदयभावसन्धिभावशबलताश्च पृथगलङ्कारा" इति। ननु यानि ध्वन्युदाहरणानि तत्रापि गुणीभूतव्यङ्ग्यत्वमनुपश्यामः, गुणीभूतव्यङ्ग्योदाहरणेषु च ध्वनित्वम्, अतः कथमियं विभागसिद्धिरित्यत आह—यद्यपि स नास्तीत्यादि। स्वप्रभेदादिभि-

साहित्यचूडामणिः

"अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात्।
भावानां च रसानां च बन्ध ऊर्जस्वि कथ्यते॥"

इति। समाहितमिति परिहाररूपत्वात्। यथाह—

"रसभावतदाभासवृत्तेः प्रशमबन्धनम्।
अन्यानुभावनिश्शून्यरूपं यत्तत् समाहितम्॥"

इति। रसस्य परविश्रान्तिलक्षणस्य प्रशाम्यदवस्था न संभवतीति व्यतिरिक्तविषयमेतदवगन्तव्यम्। इत्थं च रसभावतदाभासभावप्रशमानां चतुर्णां यथायोगमङ्गत्वे[1] रसवदादयश्चत्वारोऽलङ्कारा इति निष्कर्षः। युगपल्लक्षणमेतेषां चित्तवृत्तिविशेषरूपं साधर्म्यं सूचयितुम्। ननु भावप्रशमपर्यन्तमेते चत्वारः प्रपञ्चिताः, तत् कथं भावोदयादीनप्युदाहृत्योक्तमित्यत्राह— यद्यपीति। कश्चिद् ब्रूयादिति। यत् सूत्रं— "भावोदयभावसन्धिभावशलताश्चैते पृथगलङ्कारा" इति। भावप्रशमवदेतेऽप्यलङ्कारा इत्यर्थः। यथाह दण्डी—

"ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति"

इति। ननु किंकुर्वता रसादिना रसादिः परिष्क्रियते। ननूपमयापि किंकुर्वत्या[2] वाक्यार्थः परिष्क्रियते। ननु तयोपमीयत इति चेत् तर्हि रसेनापि रसीक्रियत इति को विशेषः। ननु ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्करः संसृष्टिर्वा नियमेनभावी, यतो निश्शेषच्युतेत्यादौ ध्वनावपि मिथ्यावादिनीति बान्धवज-

१. 'त्वेन र' ख. पाठः. २. 'पि सा र' ग. पाठः. ३. 'त ख. पाठः.

यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति, तथापि प्रधानेन व्यपदेशा भवन्तीति कचित् केनचिद् व्यवहारः।

जनस्थाने भ्रान्तं कनकमृगतृष्णाहृतधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता नत्वधिगता॥

सम्प्रदायप्रकाशिनी

रित्यादिशब्दाद् ध्वनेर्गुणीभूतव्यङ्ग्यप्रभेदैरलङ्कारैः सालङ्कारैः स्वप्रभेदैः सालङ्कारैर्गुणीभूतव्यङ्ग्यप्रभेदैश्चेत्यर्थः।

अथ शब्दशक्तिमूलस्यालङ्कारध्वनेर्गुणीभावं दर्शयति—जनस्थान इति। जनस्थाने जनसन्निवेशे जनस्थानाख्ये दण्डकारण्यपरिसरे च। कनकमृगतृष्णा धनाशारूपो मोह इत्यर्थः, कनकमृगे जिघृ-

साहित्यचूडामणिः

नस्याज्ञातपीडागमेत्यत्र वाच्यातिशयासम्भवाद् गुणीभूतव्यङ्ग्यत्वम्। शुद्धे हि ध्वनित्वे "सत्यं निरुपमौनगर्भवदनव्याख्यातभावाक्षरामि"त्यादिवद् भवितव्यं तदतिशयेन। एवं "ग्रामतरुणमि"त्यादौ शृङ्गारस्फुरणस्यानपह्नवनीयत्वात् सङ्करो गुणीभूतव्यङ्ग्यस्येति चेत्। तत्राह — यद्यपीति। आदिपदादन्यप्रभेदः। तथापीति। प्रधानेन व्यपदेशा भवन्तीति। यस्य यत्रोपपत्तिबाहुल्यं तत्र तेन व्यपदेशः। यदाह— "पत्युः शिरश्चन्द्रकलामि"त्युदाहृत्य

"प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः॥"

इति क्रमे "तस्माद् वाक्यमत्र ध्वनिः। पदानि तु गुणीभूतव्यङ्ग्यानि। .... यत्र वाक्ये गुणीभूतव्यङ्ग्यैरुद्भासितेऽपि रसादितात्पर्यं नास्ति, तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः" इति।

प्रकृतमनुसरन्नाह —जनस्थान इति। राजस्थानादौ पर्यटितम्।

१. 'सामान्येन', २. 'शो', ३. 'ती', ४. 'सं' क. पाठः ५. 'रैः स्व' ख. पाठः ६. 'रैर्गु' ङ. पाठः. ७. 'दैर्गु' घ. पाठः. ८ 'रहस्य', ९. '[illegible]', १०. 'ति। अ' ग. पाठः.

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानो-पमेयभावो वाच्यतां नीतः ।

आगत्य सम्प्रति वियोगविसंस्थुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि! पादपतनेन सहस्ररश्मिः ॥

---

सम्प्रदायप्रकाशिनी

क्षाकौतुकं च । वैदेहीति मैथिलीति, अन्यदा तु देहि वितर, वै इति प्रसिद्धौ निपातः । लङ्काभर्तुर्दशग्रीवस्य, अलं पर्याप्तं काभर्तुर्दुष्प्रभोश्च । वदनपरिपाट्यामिषुघटना शरसंयोजनं, वदनपरिपाटीषु घटना याचनार्थं वदनसविधे वृत्तिश्च । कुशलवसुता कुशलमबाधितं वसु येषां तेषां भावः, कुशलवौ सुतौ यस्याः सा जानकी च ।

अनुरणनरूप इति, दाशरथिवृत्तान्तस्याप्राकरणिकत्वात् । वाच्यतां नीतः, मया रामत्वमिति शब्देनोपादानात् ।

अर्थशक्तिमूलस्य वस्तुध्वनेर्दर्शयति — आगत्य सम्प्रतीति । पादपतनं किरणावतारः प्रणामश्च ।

साहित्यचूडामणिः

कनकेन धनसामान्यं लक्ष्यते तदेव मृगतृष्णा अर्कमरीचिका तया हृता बुद्धिर्यस्य । वैशब्दः प्रसिद्धौ । अलं पूर्णं कृत्वा काभर्तुः कुत्सितप्रभोः वदनं व्यक्ता वाक् स्तोत्ररूपा तस्य परिपाटीषु परम्परासु घटना उद्योगः इति निर्विण्णस्य कस्यचित् प्राकरणिकं प्रमेयम् । अन्यस्तु जनस्थाने खरदूषणावासे । कनकमृगः काञ्चनहरिणः तत्र तृष्णा प्रेयसीप्रयोजिता । वैदेहि! सीते! । लङ्काभर्ता दशकन्धरः । तस्य यानि वदनानि मुखानि तत्परिपाट्यामिषुघटना शरयोजना । एवञ्च मया राघवत्वमात्तं स्वीकृतं किन्तु कुशलवौ सुतौ तनयौ यस्याः सा सीता न प्राप्ता, कुशलमक्लेशलभ्यं वसु वित्तं यस्य तस्य भावश्च । अतश्च जनस्थानादिशब्दानां या शक्तिरभिधा तन्मूलानुस्वानलक्षणो रामेण सह याच्ञाखिन्नस्य पुंस उपमानोपमेयभाव इत्युपमालङ्कारो वाच्यस्य

---

१. 'च्याङ्गतां' ख. पाठः. २. 'ली । अ' ख. घ. पाठः.

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ।

वाच्यसिद्ध्यङ्गं यथा —

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

---

सम्प्रदायप्रकाशिनी

निरपेक्षेति अङ्गभूतव्यङ्ग्यमन्तरेण वाच्यसिद्धिर्दर्शिता । सापेक्षत्वे हि वाच्यसिद्ध्यङ्गता स्यात् ।

एवमपराङ्गव्यङ्ग्यमसंलक्ष्यक्रमतया संलक्ष्यक्रमतया चोदाहृत्य क्रमप्राप्तमुदाहर्तुमाह — वाच्यसिद्ध्यङ्गं यथेति ।

भ्रमिमरतिमिति । भ्रमिरयथावद्दर्शिता । अरतिरनवस्था । प्रलयोऽक्षवृत्तिविलयः । मूर्छा तासामेव स्तम्भः । तमो व्यामोहः ।

साहित्यचूडामणिः

'मंयात्तं रामत्वमि'त्याभिधेयस्याङ्गतां नीतः । एतेन व्यतिरेको व्याख्यातः, कुशलवसुता नत्वधिगतेत्युक्तत्वात् ।

एवं शब्दशक्तिमूलोऽलङ्कार उदाहृतः । अथार्थशक्तिमूलं वस्तुमात्रमुदाहरति —आगत्येति । क्वचिदपि मेरुपार्श्वादौ विपक्षभवने च ।

नायकश्च नायिका च नायकौ, तयोर्वृत्तान्तो यथानिर्दिष्टार्थसामर्थ्यसमुत्थितसूर्यपद्मिन्योर्वृत्तान्ततयाध्यारोपितेनैव स्वरूपेण स्थितः वस्तुरूप इति पूर्वोदाहरणाद् भिन्नस्वरूपः । गुणीभूतव्यतिरेके वक्तुरसंबन्धाभिधायित्वप्रसङ्ग इति सूचयितुमेवकारः । निरपेक्षेत्यतेन वाच्यसिद्ध्यङ्गादस्य भेद उपपाद्यते । तद्धि वाच्यस्य या सिद्धिरुत्पत्त्यवस्था तत्राङ्गम् । एतत् तु सिद्धस्य वाच्यस्य पश्चादन्वयदशायामङ्गम् । स्वासिद्धिं प्रति निरपेक्षे रविकमलिनीवृत्तान्तेऽध्यारोपेण स्थित इति यावत् ।

क्रमप्राप्तं वाच्यसिद्ध्यङ्गमेवाह — वाच्येति ।

भ्रमिमिति । जलदभुजगजं विषमित्यत्र विषशब्देन सलिलमभिधीयते गरलं व्यज्यते । तच्च व्यङ्ग्यं जलदं प्रति भुजगरूपणस्य सिद्धिमुत्पत्तिं करोति । ततश्च व्यङ्ग्यवस्तुसमर्पणप्रवृत्तस्य वाच्यस्य सिद्धौ प्रत्युत तद् व्यङ्ग्यं

---

१. 'न्तस्य योऽध्यारोपस्तेनै' क. ख. पाठः

अत्र हालाहलं व्यङ्ग्यं भुजगरूपणस्य वाच्यस्य सिद्धिकृत् ।

यथावा—

गच्छाम्यच्युत! दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराचिततनुर्गोपीं हरिः पातु वः ॥

सम्प्रदायप्रकाशिनी

अत्र जलदस्य भुजगत्वरूपणलक्षणं वाच्यं जलस्य भ्रम्यादिकारिहालाहलत्वप्रतीतिमन्तरेण न सिध्यतीति वाच्यसिद्ध्यङ्गता ।

गच्छामीति । भो अच्युत! तव दर्शनेन तृप्तिरुत्पन्नेति न गच्छामि,[3] अपित्वेवं विजनस्थयोरावयोः सतोर्हतो[4]ऽयं जनोऽन्यथा सम्भावयेदिति गमनप्रश्नव्याजेन सूचितं यद् वृथावस्थानं सम्भोगमन्तरेण विफला स्थितिस्तन्निबन्धनेन खेदेनालसां गोपीमाश्लिष्यन् पुलकितो हरिः अभिरक्षतु व इत्यत्राच्युतादिपदैर्यद् व्यज्यते रिरंसालक्षणं वस्तु, तद् वृथावस्थानादिलक्षणवाच्यासिद्धावङ्गम् ।

साहित्यचूडामणिः

प्रवर्तेत इति गुणीभूतव्यङ्ग्यत्वम् । यदि च विषशब्दो हालाहलं न ध्वनेत् कथं जलदो भुजग इति रूप्येत । भ्रमिरन्तःकरणस्य वैयाकुल्यम् । अरतिरव्यवस्था । प्रलयः संज्ञानाशः । मूर्छा चैतन्यस्य स्तैमित्यम् । तमः शून्यकक्ष्याप्रवेशः । मरणं देहप्राणविश्लेष इति ।

गच्छामीति । तृप्तिराकाङ्क्षाशान्तिः यावज्जीवं पश्यन्त्या अपि न कश्चिदलंभावः अतो गच्छामीति । अच्युत! अस्खलितहृदयकाठिन्य! यस्माद् भवतो दूरतो निरीक्षणेन तृप्तिर्न संपद्यते । आमन्त्रणस्य गमनार्थं प्रयोज्यस्य वाक्यस्य भङ्गिः व्यञ्जनस्वभाववैचित्री तया सूचितो यो वृथावस्थानान्निष्फलविलम्बनात् खेदः क्लेशः तेनालसां गोपीमाश्लिष्यन्निति । अच्युततृप्त्यादीनां पदार्थानां व्यङ्ग्यम् आमन्त्रितेत्यादिवाच्यस्य सिद्धिमुत्पत्तिं करोति । यदाह—

१. गरूपणं', २. 'लदस्य' क. घ. पाठः. ३. 'मीति अ' ग. पाठः. ४. 'तो अ' क. पाठः. ५. 'दैर्व्यज्य' क. ख. पाठः.

अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य । एतच्चैकत्रैकवक्तृगतत्वेनापरत्र[3] भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः ।

अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता[4] ।
नादृष्टेन न दृष्टेन भवता विद्यते सुखम् ॥

अत्रादृष्टो यथा न भवसि, वियोगभयं च यथा नोत्पद्यते, तथा कुर्या इति श्लिष्टम् ।

---

सम्प्रदायप्रकाशिनी।

उदाहरणद्वयस्य गूढं प्रयोजनमुद्घाटयति — एतच्चैकत्रेत्यादि । भ्रमिमरातिमित्यादावेकवक्तृगतत्वेन व्यङ्ग्यं वाच्यसिद्ध्यङ्गं, गच्छामीत्यादौ तु भिन्नवक्तृगतत्वेन ।

अथास्फुटप्रस्तावः — अदृष्टे दर्शनेति । अत्र ह्युत्कण्ठोदयान्नादृष्टेन सुखं, विच्छेदभयसम्भवान्न दृष्टेन च त्वया सुखमित्युभयथापि दुःखहेतुरसीति स्फुटं प्रतीयते ।

विवक्षितोऽर्थः पुनरस्फुट एवेति दर्शयति — अत्रादृष्टो यथेत्यादि । श्लिष्टं कष्टमस्फुटमित्यर्थः ॥

साहित्यचूडामणिः

"शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः ॥"

इति ।

उदाहरणद्वयस्य मिथो वैषम्यमुन्मेषयति — एतच्चेति । एकत्र पूर्वस्मिन्नभिन्नाभिधातृनिष्ठतया, अपरत्र प्रस्तुते पूर्वत्रार्धे गोपी उत्तरत्र कविरित्यनेकाभिधातृवर्तितया ।

अस्फुटमिति । पोटास्तनसन्निवेशवदनुन्मिषितरूपमपि व्यङ्ग्यं न चमत्कारायेति भावः ।

अदृष्ट इति नायकस्य सौभाग्यम् अस्थैर्यं च प्रकटयन्त्याः कस्याश्चिदुक्तिः ।

श्लिष्टमस्पष्टम्[6] । यदाह —

---

१. 'तेत्यादि' ख. पाठः. २. 'स्य सिद्धिकृत् । ए', ३. 'नान्यत्र' क. पाठः.' ४. 'विश्लेषभी' क, 'विरहभी' ख. पाठः. ५. 'न त्व' क. पाठः. ६. 'क्लिष्टमविस्प ख. पाठः.

सन्दिग्धप्राधान्यं यथा —

हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं[1] किं विलोचनव्यापारणं[2] वाच्यं प्रधानमिति सन्देहः ।

---

सम्प्रदायप्रकाशिनी

अथ सन्दिग्धप्राधान्यं— हरस्त्विति । अत्र बिम्बफलाधरत्वादिवाच्यमहिम्ना किं विलोचनव्यापारेण चुम्बनेच्छा व्यज्यते, आहोस्विद् विलोचनव्यापारणलक्षणो वाच्य एव रत्यनुभाव उपनिबद्ध इति साधकबाधकाभावात् सन्देहः । अतो व्यङ्ग्यं सन्दिग्धप्राधान्यम् ।

साहित्यचूडामणिः

"यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन भासते ।
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः ॥"
"सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ।
यद्व्यङ्ग्यस्याङ्गिभूतस्य तत् पूर्णं ध्वनिलक्षणम् ॥"

इति । नह्यत्र कविसंरम्भः शुद्धं व्यञ्जनमवलम्ब्य विजृम्भते । किं तर्हि, नादृष्टेन न दृष्टेनेत्यादिवाच्यापेक्षया मसृणध्वन्यर्थानुकूलामभिधामुद्दिश्य, यत्र पर्यायोक्तस्यौचित्यम् ।

(सन्दिग्धेति) । सन्दिग्धप्राधान्यं तुल्यप्राधान्यं चेति द्वे, तत्राद्यं यथेत्यर्थः ।

हरस्त्विति । समुद्रस्य संक्षोभश्चन्द्रोदये कल्पान्ते चाविर्भवति । तत्र पूर्वौचित्येन परिवृत्तं धैर्यं यस्य ।

सन्देह इति । व्यापारयामास विलोचनानीत्यत्र बिम्बफलाधरोष्ठमुमामुखमुद्दिश्याभिधीयमानत्वादर्थशक्तिमूलं परिचुम्बितुमैच्छादिति किं प्रतीयमानं प्रधानम्, उत लौकिकपुरुषवैलक्षण्येन विलोचनानां त्रयाणामपि यद्व्यापा-

---

१. ... न वि', २. 'णं वा वा' ख. पाठः, ३. 'चापि भव' ग. पाठः.

तुल्यप्राधान्यं यथा —

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तु वो मित्रमन्यथा दुर्मनायते ।

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव ... करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

---

सम्प्रदायप्रकाशिनी

तुल्यप्राधान्यं दर्शयति — ब्राह्मणेति । अत्र ... गवोक्तावुत्तरार्धे यद् रक्षःक्षयसूचनलक्षणं व्यङ्ग्यं, यच्च ... क्यार्थरूपो ब्राह्मणानुसरणं श्रेयस इत्येवंरूपो वाच्योऽर्थः, द्वयोरप्य- नयोर्हि प्राधान्यं तुलया वर्तते ।

साहित्यचूडामणिः

रणं वाच्यभूतं तदेव प्रधानमिति संशयः । एतदेव प्रमाणं वाच्यस्य व्यङ्ग्येन सह प्राधान्यसन्देहे, यत् "कोपं प्रभो संहर संहरे"त्यादि... येन भग- वानिक्षुधन्वानं धक्ष्यति तेनैव नेत्रेण पार्वतीमुखावलोकनमहोत्सवं सम्भावया- मासेति ।

अथ समप्राधान्यमुदाहरति—ब्राह्मणेति । पौलस्त्यं प्रति भार्गवस्यायं सन्देशः ।

सममिति । व्याख्यातरूपस्य व्यङ्ग्यस्य वाच्यस्य च प्राधान्यं तुला- धृतवदवतिष्ठते, चमत्कारकारितायामविशेषात् । ब्राह्मणानां परिभवस्य प्रस्तु- तस्य यस्त्यागः परिवर्जनं स भवतां रक्षसामेव संपत्तये । अन्यथेति ब्राह्मणा- तिक्रमस्य कर्तव्यतापक्षे युष्माकं मित्रं भवन्नयं जनो दुर्मनायते इति यद् वा- च्यवैचित्र्यं तद् व्यङ्ग्येन सह समशीर्षिकामारोहति । व्यङ्ग्यापेक्षिणः कवेरवि- चित्रेण केवलं व्यञ्जनप्रवीणेन वाच्येन भवितव्यं, तदपराधीनोऽयं गुणीभाव इत्युपनिषत् । प्राधान्यस्य सन्देहसादृश्ययोः सहृदया एव प्रमाणं, व्युत्पित्सुभि- रन्यथापि वक्तुं शक्यत्वात् ।

---

१. 'श्र' ख. पाठः. २. 'रन' क. घ. पाठः. ३. 'भा' ग. पाठः. ४. 'स्थ' ख. पाठः. ५. 'था विवेक्तुमश' क. पाठः.

काकाक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपाद्
दुश्शासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥

अत्र मथ्नाम्येवेत्यादिव्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् ।

सम्प्रदायप्रकाशिनी

काकाक्षिप्तव्यङ्ग्यमुदाहरति—मथ्नामि कौरवेत्यादि ।

वाच्यनिषेधसहभावेनेति काकाक्षिप्तता दर्शिता । निषेधकाकुर्हीयम्[1] । काकैव वाच्यनिषेध आक्षिप्यते ।

साहित्यचूडामणिः

काकेति । शब्दशक्तिरेव स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सती विशेषार्थप्रतिपत्तिहेतुः, न काकुमात्रं, विषयान्तरे स्वेच्छाकृतकाकुमात्रेण तथाविधार्थप्रतीत्यभावात् । स चार्थो नित्यमर्थसामर्थ्यलभ्यो व्यङ्ग्योऽपि काकुविशेषसहायशब्दव्यापारोपारूढ इति गुणीभूत एव । उन्मीलितं चैतत् तृतीयोल्लासे । यदाह—

"अर्थान्तरगतिः काक्वा या[2] चैषा परिदृश्यते ।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥"

इति ।

मथ्नामीति । अत्र प्रतिनकारं काकुः । तया च वाचकशक्त्यनुप्रविष्टया मथ्नाम्येवेति संरम्भाडम्बरबहुलं व्यङ्ग्यमुत्थाप्यते, न स्वतन्त्रया व्यञ्जनशक्त्या, यतो गुणीभावो विशेषः वाच्यातिक्रमणसामर्थ्याभावात् ।

वाच्येति । न मथ्नामीति वाच्यलक्षणो यो निषेधस्तेन सहभावः सहावस्थानं तदतिक्रमणासामर्थ्यं तेन रूपेण स्थित इति । प्रश्नमात्रेण काकुविश्रान्तौ न गुणीभावश्चिन्त्यमिति ग्रन्थकारस्याकूतम् । तथाच न्यदर्शि "गुरुः खेदं खिन्ने मयि भजती"त्यत्र । एतेन काकाक्षिप्तस्य वाच्यसिद्ध्यङ्गत्वानुप्रवेशः किञ्चिद् वैलक्षण्यं च व्याख्यातम् ।

1. 'स्यं' क. ख. पाठः. । 2. 'चाऽत्रा' ग. पाठः

असुन्दरं यथा—

वाणीरकुडङ्गुड्डीणसउणिकोळाहळं सुणन्तीए ।
घरकम्मवावडाए वहुए सीअन्ति अङ्गाइ ॥

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम् ॥

सम्प्रदायप्रकाशिनी

अथासुन्दरं—वाणीरेति ।

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

अत्रापि 'ग्रामतरुणमि'तिवद् व्यङ्ग्यस्यासुन्दरतेत्याह—अत्र दत्तसङ्केतः कश्चिदिति । त एते शुद्धा भेदाः । अनेन प्रायशः सप्रभेदस्य सर्वस्यैव ध्वनेर्गुणीभावो दर्शितः । तथाहि—अगूढप्रस्तावे लक्षणामूलावुभावर्थशक्तिमूलो वस्तुध्वनिश्चोपलक्षणत्वेन प्रदर्शितौ । अथापराङ्गव्यङ्ग्यप्रस्तावे रसादिको रसाद्यङ्गत्वेन, अनुरणनरूपं च वाच्याङ्गत्वेन सावान्तरवैचित्र्यप्रपञ्चमुदाहृतम् । तथाहि—रसो रसस्य, रसो भावस्य, भावो भावस्याङ्गत्वेनोदाहृतः । भावस्य रसाङ्गत्वं स्फुटमिति नोदाहृतम् । अथ भावस्य रसाभासभावाभासौ चेति रसवदाद्यलङ्कारत्वेन त एते दर्शिताः । भावप्रशमादयोऽपि पृथगलङ्कारत्वेन । अथ वाच्याङ्गव्यङ्ग्यादिषु वस्तुमूलालङ्कारध्वनिव्यतिरिक्ताः सर्व एवानुरणनरूपाः प्रदर्शिता इति ॥

साहित्यचूडामणिः

वाणीरेति ।

वानीरकुडुङ्गोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि[2] ॥

वाच्यं[1] सचमत्कारं, तस्मान्न सौन्दर्यमस्य । यदाह—

"प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्ये चारुत्वं स्यात् प्रकर्षवत् ॥

१. 'च्यं चमत्कारकारकम् ॥' क. पाठः. २. 'नीति । वा' क. ख. पाठः.

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥२॥**

यथायोगमिति ।

व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥

सम्प्रदायप्रकाशिनी

एषां संकरसंसृष्टी प्राग्वदेवेत्याह — **एषां भेदा** इति ।

ननु यथायोगमित्युच्यते, का योग्यतेति शङ्कित्वा योग्यतां ध्वनिकारसंवादं पुरस्कृत्य विवेचयति — **व्यज्यन्ते वस्तुमात्रेणे**त्यादिना । वस्तुमात्रेण शब्दशक्तिमूलतयार्थशक्तिमूलतया वा वस्तुमात्रेण

साहित्यचूडामणिः

इति । इक्षुखण्डकल्पं हि काव्यं कल्पनीयम् । तत्र रसनिःष्यन्दस्थानीयं व्यङ्ग्यम् ऋजीषप्रायं च वाच्यमिति वाच्यादपि व्यङ्ग्यस्य चमत्कारार्पणप्रावीण्येन भवितव्यम् । अत्र तु प्रत्युत व्यङ्ग्यादपि वाच्यस्य चारुत्वम् । तथाहि—शकुनिकोलाहलं शृण्वत्या इति हेतौ शता । यस्मादस्या अङ्गानि सीदन्ति किंकर्तव्यतया विमुह्यन्ति यदेषा गृहकर्मणि व्याप्रियत इति वाच्यावस्थैवात्र सचेतसां चर्वणीया । ततश्च व्यङ्ग्यस्यासौन्दर्यं नाम वाच्यवर्तिनः प्राधान्यस्याधिक्यं तुल्यत्वसंशयविलक्षणम् । यद्यप्यत्र पर्यन्ते रसध्वनिरस्ति तथापि मध्यमकक्ष्यानिविष्टोऽसौ स्वातन्त्र्येण न रसोन्मुखी भवति, अपितु वाच्यमेवार्थमुपस्कर्तुं धावतीति सर्वमप्यनाकुलम् ।

अथ ध्वनिवद् गुणीभूतव्यङ्ग्यस्यापि संसृष्टिसङ्करौ योज्यावित्याह — **एषामिति** — चकारो भिन्नक्रमः ।

**व्यज्यन्त** इति । यदा वस्तुमात्रेणालङ्कृतय उपमादयो ध्वन्यन्ते तदा तासां निश्चितो ध्वनिकक्ष्याप्रवेशः, यतो वाच्यकक्ष्यायामपि प्रायेण काव्यवृत्तिरलङ्कृत्याश्रयेति कारिकार्थः । एतदुक्तं भवति —

"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः ॥
अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत् ।
चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥"

१. 'कदा यो' ख. ग. पाठः. २. 'व्याकु' क. ख. पाठः.

इति ध्वनिकारोक्तादिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ॥ २ ॥

**सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।**

सालङ्कारैरिति तैरिवालङ्कारैः अलङ्कारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता —

सम्प्रदायप्रकाशिनी

व्यज्यमानानामलङ्कृतीनां ध्वन्यङ्गतामन्तरेण काव्यतैव न स्यादिति ध्वनिकारनिरूपितनीत्या तेषु भेदेषु गुणीभूतव्यङ्ग्यता न संभवतीति तदपोहनाय यथायोगमित्युक्तमिति यावत् ॥ २ ॥

तदितरेषां तु गुणीभूतव्यङ्ग्यप्रभेदानां सङ्करसंसृष्टिभ्यां भेदप्रपञ्च उन्मीलनीय इत्याह[1] — सालङ्कारैरिति ।

सालङ्कारतां द्विधोपदर्शयति — तैरिवालङ्कारैरलङ्कारयुक्तैश्च तैरिति । अत्रायमाशयः — य एते गुणीभूतव्यङ्ग्यास्तेषां शुद्धैः सङ्करसंसृष्टिरूपैश्च प्रभेदैर्ध्वनिभेदानां[2] शुद्धानां सङ्करसंसृष्टिरूपाणां च सङ्करसंसृष्टि[3]रूपाभ्यां[4] च योगः । यथा[5] च गुणीभूतव्यङ्ग्यैः तथालङ्कारैरपि, अलङ्कारसंकीर्णैः तत्संसृष्टैर्वा[6] गुणीभूतव्यङ्ग्यैश्च ध्वनेर्योगो[7]ऽनुसर्तव्य इति ।

साहित्यचूडामणिः

व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायामेव सत्यां ध्वनावन्तःपातः इतरथा गुणीभूतव्यङ्ग्यतैवेति ध्वनितद्वृत्तियुक्त्या वस्तुमात्रव्यङ्ग्यानामलब्धप्राधान्यानामप्यलङ्काराणां ध्वनित्वनिषेध इति कस्यचित् प्रतिभासेत । तन्निरासार्थोऽयं प्रतिप्रसवः ॥ २ ॥

एवंच ध्वनिगुणीभूतव्यङ्ग्ययोरसङ्कीर्णलक्षणयोः सङ्करसंसृष्टी पृथगुपपाद्य संप्रत्यन्योन्यमाह — सालङ्कारैरिति । योगो व्यतिकरः ।

१. 'त्यत आह' क. ख. घ. पाठः. २. 'नां स' क. पाठः. ३. 'ष्टिभ्यां', ४. 'भ्यां योगः', ५. 'त' क. ख. पाठः. ६. 'न्यस्या।वे', ७. 'यां स' ग. पाठः.

सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥

इति ।

**अन्योन्ययोगादेवं स्याद् भेदसंख्यातिभूयसी ॥ ३ ॥**

एवमनेन प्रकारेणावान्तरभेदप्रभेदगणनेति प्रभूततरा गणना । तथाहि—शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यं, का गणना सर्वेषाम् । सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः,

सम्प्रदायप्रकाशिनी

अत्र संवादः—**सगुणीभूतव्यङ्ग्यैरि**ति । **उद्द्योतत** इति । अत्र ध्वनिभेदः कर्ता ।

यद्येवं किमत इत्याह—**अन्योन्ययोगा**दिति । एवमन्योन्ययोगान्निमित्ताद् भेदप्रभेदानामतिभूयसी संख्या ।

**प्रभूततरे**ति ईयसुनोऽर्थः । तामेवातिप्रभूततरतामनुस्मारयति—**तथाही**ति । **सर्वेषा**मिति । रसान्तराणां वस्त्वलङ्कारध्व-

साहित्यचूडामणिः

तुल्ययोगिलक्षणे सम्बन्धिविशेषे सहशब्दस्य समास इत्याह—**तै**रिवेति । ध्वनिस्कन्धस्य पृथगनन्तरनिरूपितैर्गुणीभूतव्यङ्ग्यैर्दशमे समर्थयिष्यमाणैरुपमादिभिश्च सह संसृष्टिः सङ्करश्च । अथ सम्बन्धमात्रे समास इत्याह—**अलङ्कारयुक्तै**रिति । प्रथमं गुणीभूतव्यङ्ग्यानामलङ्काराणां च संसृष्टिसङ्करौ संपाद्य पश्चादमीभिर्ध्वनिस्कन्धस्य चतुर्गुणनमि(ति) ।

अत्र ध्वनिग्रन्थं संवादयति—**सगुणीभूते**ति । यद् व्याख्यातं वृत्तौ स्वप्रभेदसंकीर्णः स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो गुणीभूतव्यङ्ग्यसंसृष्टो वाच्यालङ्कारसङ्कीर्णो वाच्यालङ्कारसंसृष्ट इत्यादि ।

**सर्वेषां सङ्कलन** इति । लोष्टसञ्चारक्रमेण गुणने कृते । यदाह—

१. 'रस्य भ' क. पाठः. २. 'मि', ३. 'सालङ्कारा' ग. पाठः. ४. 'राणां चे' क. पाठः.

व्यङ्ग्यस्य त्रिरूपत्वात् । तथाहि — किञ्चिद् वाच्यतां स-

सम्प्रदायप्रकाशिनी

नीनां चेत्यर्थः । तर्हि अनवच्छिन्नाः केनोपाधिनावच्छिद्य व्यवह्रियन्त इत्यत आह — सङ्कलनेन पुनरिति । सङ्कलना संग्रहः । त्रिरूपत्वादिति संकलने हेतुः । तामेव त्रिरूपतां विविच्य दर्शयति — तथाहीत्यादिना । वाच्यतां सहत इति । यद् वस्तुरूपमलङ्काररूपं च व्यङ्ग्यं

साहित्यचूडामणिः

"ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात ।
न काव्यार्थविरामोऽस्ति यदि स्यात प्रतिभागुणः ॥"

इति । यच्चोक्तं विषमबाणलीलायां —

*"ण अ ताण घडइ ओही ण अ ते दीसन्ति कह वि पुणरुत्ता ।
जे विब्भमा पिआणं अत्था वा सुकविवाणीण ॥"

इति । एतदशेषोदाहरणं विरिञ्चिनापि दुष्प्रपञ्चम् ।

अय विदग्धैरुपलालनीयो ध्वनिर्गुणीभावतिरोहितोऽपि ।
पदातिसाधारणवेषधर्मा क्रीडन् विनोदादिव सार्वभौमः ॥

नन्वित्थमस्तु ध्वनीनामानन्त्यं, तत् कथङ्कारमस्य विभागव्यवहारकौतूहलमित्यत्राह — किं पुनरिति । किन्त्वित्यर्थः । त्रयो भेदा इति । संक्षेपतो विभाग इति यावत् । ननु कोऽयं ध्वनिर्नाम । नैष चारुत्वस्थानं, शब्दार्थरूपत्वाभावात् । नापि चारुत्वहेतुः, गुणालङ्कारव्यतिरिक्तत्वात् । नचासौ नृत्तगीतादिवत् काव्यस्योपयोगी । कवनीयं हि काव्यं, नच नृत्तगीतादि कवनीयमिति स्वरूपमेव ध्वनेर्निर्णेतव्यमिति किमुत त्रैविध्यमिति चेद् । उच्यते । न तावद् विप्रतिपत्तिस्थानमसदेव, प्रत्युत सिद्धे धर्मिणि धर्ममात्रकृता विप्रतिपत्तिः । अन्यथा साधनदूषणानां निरधिष्ठानत्वप्रसङ्ग इत्यस्ति तावद् ध्वनिः । स एव मुख्यं चारुत्वस्थानम् । उपचारात् तु शब्दार्थौ । तत एवायं चारुत्वहेतुः । न खलु शवकलेबरस्य किञ्चिदलङ्कारौचित्यम् । तस्मादयमेव कवनीयो यदर्थो व्यतिरिक्तः प्रयासः । अलङ्कारग्रन्थेष्वप्रसिद्धिर्विरुद्धो हेतुः तत एव प्रयत्नेन लक्षणीयत्वात् । तदयमत्र प्रयोगः प्रसिद्धं वाच्यं धर्मि तद्व्य

१ 'हणम् । त्रि' ख. पाठः. २. 'न' ख. ग. पाठः. ३. 'त्वव्यति' ख. पाठः.

* नच तेषां घटतेऽवधिर्नच ते दृश्यन्ते कथमपि पुनरुक्ताः ।
ये विभ्रमाः प्रियाणामर्था वा सुकविवाणीनाम् ॥

विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽप्यर्थो[1] नानात्वं भजते, विशेषव्यपदेशहेतुश्च भवति, तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम। उच्यते। लक्षणीयस्यार्थस्य नानात्वेऽपि अनेकार्थशब्दाभिधेयवन्नियतत्वमेव। न खलु मुख्येनार्थेनानियत-

सम्प्रदायप्रकाशिनी

त्यादौ तु सकललोकातिशयितविक्रमत्वादौ। अतो लक्षणीयार्थस्य नानात्वं दृश्यते, वाच्यापेक्षया विशेषव्यपदेशहेतुत्वं च, शब्दार्थायत्तश्चैतदवगमः, वैविध्ये प्रकरणवक्त्रादिसव्यपेक्षश्चेति यो[3] या व्यङ्ग्ये[4] सामग्री दर्शिता, सा सा सर्वत्र लक्ष्ये दृश्यत इति कोऽयं प्रतीयमानो नाम नूतनोऽर्थ इत्याक्षेपः। तदेतत् समाधत्ते—उच्यते लक्षणीयस्येत्यादिना[6]। यद्यप्युक्तोदाहरणेषु लक्षणीयोऽर्थो नानारूपः, अथापि अनेकार्थशब्दवाच्यवन्नियतत्वं न जहाति। ननु कथं नियतत्वमित्यत आह—न खलु मुख्येनेत्यादि। ननु दोषोऽयं व्यङ्ग्येऽपि

साहित्यचूडामणिः

शयित्वमिति लक्षणीयोऽप्यर्थो बहुत्वमवलम्बते, न केवलं व्यञ्जनीयः। विशेषेण वैलक्षण्येन यो व्यपदेशः बोद्धृत्वव्यतिरेकेण विदग्ध इति प्रत्येतुः, प्रतीतिव्यतिरेकाच्चमत्कार इति प्रत्ययस्य, तद्धेतुर्भवति। शब्दार्थेति। द्वयोरपि लक्षकतयाङ्गीकारात् किंनिबन्धनमस्य वैचित्र्यमित्यत्राह—प्रकरणादीति। नूतनः अन्यत्रानुल्लिखितपूर्वः। दूषयति—उच्यत इति। अनेकार्थेति। गवादिशब्दवन्नियतत्वमेव लक्षणीयस्य, न पुनर्व्यङ्ग्यस्येव सर्वतोमुखता। व्यतिरेकतो हेतुमाह—न खल्विति। अनियतेति। अव्यवस्थितसम्बन्धः।

"अभिधेयेन संबन्धात् सादृश्यात् समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता॥"

इत्युक्तत्वाद् यथोचितसम्बन्धनैयत्यरहितस्यार्थस्य लक्षयितुमशक्यत्वम्, अति-

१. 'योऽर्थो' क. पाठः. २. 'ब्दाय' क. ख. घ. पाठः. ३. 'या व्य' ख. ग. पाठः. ४. 'ङ्ग्य' क. पाठः. ५. 'सा स' ग. पाठः. ६. 'णादिषु' क. ग. पाठः, ७. 'नानार्थ' क. घ. पाठः. ८. 'दिना।' ख. पाठः.

सम्बन्धो लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिविशेष-वशेन नियतसम्बन्धः अनियतसम्बन्धः सम्बद्धसम्बन्धश्च द्योत्यते। नच

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहअं पलोएहि।
मा पहिअ! रत्तिअन्धअ! सेज्जाए महं णिमज्जिहिसि॥

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः। तत्

सम्प्रदायप्रकाशिनी

तुल्य इत्यत आह— प्रतीयमानस्त्वित्यादि। यथा प्रतीयमानो मुख्येन नियतसम्बन्धोऽनियतसम्बन्धः सम्बद्धसम्बन्धश्च, तदुदाहृत्य दर्शयिष्यति। लक्ष्यपक्षे स्फुटं दोषान्तरमाह— न च अत्ता एत्थे-त्यादि।

श्वश्रूरत्र शेते अत्राहं दिवसं प्रलोकय।
मा पथिक! रात्र्यन्ध! शय्यायां मम निमाङ्क्षीः॥

दिवसमित्यत्यन्तसंयोगे द्वितीया। अत्र हि न वाच्यबाधः, अन्य-

साहित्यचूडामणिः

प्रसङ्गात्। व्यङ्ग्यविषयमनैयत्यमाह—प्रतीयमानस्त्विति। क्वचित् प्रकरणा-दिना नियामकेन नियतसम्बन्धः, क्वचिदनियतसम्बन्धः, क्वचित् संब(न्धः द्ध)-सम्बन्धः इति सर्वाकारमनैयत्यम्। नन्वविवक्षितवाच्ये लक्षणया व्यञ्जन-विरोध इति कथञ्चिदाशङ्क्यतां, विवक्षितान्यपरवाच्ये तु कथं मुख्यार्थ-भङ्गाद्यभावादित्याह— न चेति।

अत्ता इति।

श्वश्रूरत्र शेतेऽत्राहं दिवसकं प्रलोकय।
मा पथिक! रात्र्यन्ध! शय्यायामावयोः शयिष्ठाः॥

इति। महं इति निपातोऽनेकार्थवृत्तिः आवयोरित्यर्थे, ममेत्येकवचनस्य शङ्काव-हत्वात्। अत्रेति। प्रयत्नादनिभृतसंभोगपरिहारेण भाव्यम्। दिवसकः कु-त्सितो दिवसः। प्राकृते हि न लिङ्गनियमः। मा त्वं यावदस्तमयं त्वरिष्ठाः।

१. वि' क., 'पु' ख. पाठः. २. 'ह' ग. पाठः. ३. 'द्दोषः अ' ख. पाठः. ४. 'द्दति' क. पाठः.

कथमत्र लक्षणा। लक्षणायामपि व्यञ्जनमवश्यमाश्रयणीयमिति प्रतिपादितम्। यथा च समयसव्यपेक्षाभिधा, तथा मुख्यार्थबाधादित्रयसव्यपेक्षा लक्षणा। अत एवाभिधापुच्छभूता सेत्याहुः।

नच लक्षणात्मकमेव ध्वननं, तदनुगमेन तस्य

सम्प्रदायप्रकाशिनी

**परत्वेन विवक्षणात्। अतो लक्षणैव नास्ति। कथं लक्ष्यत्वं व्यङ्ग्यस्य सङ्गच्छताम्। ननु यत्र लक्षणा तत्रायं दोष इत्यत आह— लक्षणायामपीत्यादि। प्रतिपादितं, द्वितीय इति शेषः। नियतत्वादभिधालक्षणयोर्भेदोऽप्यल्पक इत्याह— यथा च समयेत्यादि। अभिधोपायतायाः प्रामाणिकप्रसिद्धिं दर्शयति— अत एवाभिधापुच्छेत्यादि।**

**इत्थमभिधालक्षणयोर्नियतत्वं प्रसाध्य व्यञ्जनस्यानियतत्वं नानामुखमुपपादयति— नच लक्षणात्मकमेवेत्यादिना। तथाभिधा-**

साहित्यचूडामणिः

न सर्वथा त्वामुपेक्षे यस्मादत्रैवाहं तत् प्रलोकय मिथो मुखावलोकनविनोदेन दिनमतिवाहयावः। पश्चाच्छ्वश्रूनिद्रान्वेषणपूर्वकं यथोचितमाचरावः इति व्याख्यायां न व्यक्तिविवेकव्याकृतावद्यावतारः। अत्र न लक्षणासामग्री तस्याश्च प्रयोजनावश्यम्भावः तच्च व्यङ्ग्यमिति न पुनरपि व्यङ्ग्याङ्कुरोत्पत्तिरित्याह— **लक्षणायामिति**। यथाभिधा सङ्केतसहाया तथा मुख्यार्थबाधादिसव्यपेक्षा लक्षणा, तत्र त एव प्रमाणमित्याह— **अत एवेति**। अभिधायाः पुच्छभूता न तु स्वतन्त्रेत्याहुः। सङ्केतापेक्षिण्यभिधा सङ्केतितार्थापेक्षिणी लक्षणा इति कियानस्या उच्छ्रायः।

तथाविवक्षितवाच्येऽपि व्यञ्जनस्य न लक्षणया तादात्म्यमित्याह— **नचेति**। लक्षणाया अनुगमनेन साहचर्यमात्रेण तस्य ध्वननस्य दर्शनात्। यद्यपि

१. 'सा च । न' क. घ. पाठः. २. 'तया प्रा', ३. 'क्वसि', ४. 'कत्वमे' ग. पाठः.

दर्शनात् । नच तदनुगतमेव, अभिधावलम्बनेनापि तस्य भावात् । नचोभयानुसार्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः । नच शब्दानुसार्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेरिति अभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती व्यञ्जनध्वननादिपर्यायो व्यापारोऽनप-

---

सम्प्रदायप्रकाशिनी

नुसारीति नियच्छाम इत्यत आह — नच तदनुगतमेवेत्यादि । तर्ह्युभयानुसारित्वेन नियम्यत इत्यत आह — नचोभयेत्यादि । तर्हि शब्दानुगमेन नियम इत्यत आह — अशब्दात्मकेत्यादि ।

साहित्यचूडामणिः

"रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥"

इत्यत्राप्यस्त्युपचारः, तथापि न तदात्मैव ध्वनिः तद्व्यतिरेकेणापि भावात् । यदाह—

"वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥"

इति । तत्रापि नियमो नास्तीत्याह— नचेति । अविवक्षितवाच्यव्यतिरिक्ते सर्वत्र ध्वननमभिधामवलम्ब्य प्रवर्तत इत्युक्तत्वात् । यदाह—

"भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः ।
कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ॥"

इति । अभिधालक्षणोभयानुधावनसङ्कोचोऽप्यस्य न विद्यत इत्याह — न चोति । तत्र हेतुमाह —अवाचकेति । न शब्दानुसार्येव वर्णानामपि शब्दनस्वभावतया शब्दशरीरानुप्रवेश इति सर्वाकारेण शब्दप्रवृत्त्यनुसरणयन्त्रणा तस्य नास्ति । अशब्देति । शब्दस्वरूपाननुप्रविष्टकटाक्षादिगततया तस्य प्रसिद्धेः । किन्च क्वचिदनुमानादभिप्रायादौ कुत्रचित् प्रत्यक्षाद् दीपालोकादौ क्वचन कारणत्वाद् गीतध्वन्यादौ च क्वचिदपि शब्दवृत्तेरविवक्षित-

---

1. 'तामित्य' ख. ग. पाठः.

ध्वनीय एव । तत्र 'अत्ता एत्थे'त्यादौ नियतसम्बन्धः । 'कस्स व ण होइ रोसो' इत्यादौ अनियतसम्बन्धः ।

विवरीअरए लच्छी बह्मं दट्ठूण णाहिकमलत्थं ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥

सम्प्रदायप्रकाशिनी

तदेतन्मतत्रयमुपसंहरति—इत्यभिधातात्पर्येत्यादि । अत्ता एत्थेत्यादाविति । 'अत्ता एत्थ णिमज्जइ' इत्यत्र हि व्यङ्ग्यो वाच्येन नियतसम्बन्धः । कस्स व ण होइ इत्यादि । अत्र हि विषयभेदाद् अनियतसम्बन्धः । विवरीएत्यादि ।

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥

साहित्यचूडामणिः

वाच्यादित्यप्यनियतिरुन्नेया । उपसंहरति—इतीति । नियतसम्बन्ध इत्यादिना यदुक्तं तद् विभागेन दर्शयति — अत्तेति । रात्र्यन्धत्वनाटितकवैदग्ध्यवन्तं पान्थं प्रति व्यङ्ग्यस्य सम्बन्धनियमः । 'कस्स व णे'त्यत्र सखी तत्कान्तस्तत्पत्न्यस्तदुपपतिरित्यादिरनेको विषय इत्युक्तम् ।

विवरीअरए इति ।

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥

ननु महिम्ना प्रहेलिकाप्रायमिति दूषितमिति चेत् तन्न ।

"अष्टौ पुत्र ! कुरु श्लोकानिति पित्रोदितः सुतः ।
चकार पञ्च च श्लोकान् पितुराज्ञा न खण्डिता ॥"

इत्यादि हि प्रहेलिका । न च तस्याः सर्वस्या अपि नीरसत्वनियमः ।

"आकृष्यादावमन्दग्रहमलकमरं वक्त्रमासज्य वक्त्रे
कण्ठे लग्नः सुकण्ठः पृथुनि कुचतटे दत्तगाढाङ्गसङ्गः ।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे
बाले ! लज्जा निरस्ता नहि नहि सरले! चोलकः किं त्रपाकृत् ॥"

१. 'एवि । वि' ग. पाठः.

इत्यादौ सम्बद्धसम्बन्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते । तन्निमीलनेन सूर्यास्तमयः । तेन पद्मस्य सङ्कोचः । ततो ब्रह्मणः स्थगनम् । तत्र सति गोप्याङ्गस्यादर्शनेऽनियन्त्रणं निधुवनविलसितम् ।

अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एवं वाच्यार्थः, वाक्य-

सम्प्रदायप्रकाशिनी

अत्र सम्बद्धसम्बन्धतां विविच्य दर्शयति — अत्र हि हरिपदेनेत्यादि । अनेन वाच्यसम्बद्धैर्व्यङ्ग्यैरुत्तरोत्तरैर्व्यङ्ग्यैः[2] सम्बन्ध इति सम्बद्धसम्बन्धता ।

ननु 'सत्यं ज्ञानमि'त्यादिवाक्यनयेनाखण्डया बुद्ध्या निर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव[3] वाचकमिति मन्वानान् प्रत्याह — अखण्डबुद्धीत्यादिना । सत्यज्ञानादिषु हि वाक्येषु धर्मधर्मिभावा-

साहित्यचूडामणिः

इत्यादौ व्यभिचारात् । यदि च व्यवधानवत्त्वादिदं प्रहेलिकाप्रायं, नहि "पत्युः शिरश्चन्द्रकलामनेने"त्यादावपि प्रहर्षौत्सुक्यादिभावान्तरितत्वात् तथा ।

"लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि! ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ॥"

इत्यत्र यो वदनपूर्णेन्दुबिम्बयोरभिव्यक्तो रूप्यरूपकभावस्तदन्तरिता चाटुकावगतिरिति न तथात्वापत्तिः । यदि तु व्यभिचार्यलङ्कारप्रयुक्तं व्यवधानं सहामहे न वस्तुमात्रप्रयुक्तमित्युच्येत तदाग्रहमात्रम्, अनिबन्धनत्वात् । ततश्च

*"चित्रवस्तुव्यवायिनि ।
प्रहेलिकादिरूपेऽपि वाक्ये ध्वन्यात्मता यतः ॥"

इत्येतद् पर्यहारि । एतावदालोचनीयं — यद् 'विवरीअरए' इत्यादौ व्यञ्जनं प्रति शाब्दी शक्तिरल्पीयसी आर्थी पुनरतिप्रभूतेति ।

अथ वैयाकरणानां साधूनां ध्वनिवादविरुद्धं प्रमेयं प्रतिक्षिपति—अख-

१. 'वार्थः' क. ख. पाठः. २. 'न्यै', ३. 'व वाच्यः वाक्यमेव वा' ग. पाठः.

* 'छिन्नवस्तु' इति मुद्रितव्यक्तिविवेकः ।

मेव च वाचकमिति येऽप्याहुः, तैरप्यविद्यापदपतितैः पदप-दार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव।

ननु वाच्यादसम्बद्धस्तावन्न प्रतीयते, यतःकुतश्चिद्

सम्प्रदायप्रकाशिनी

भावादखण्डो योऽयं परब्रह्मात्मको वाक्यार्थः, स एव वाच्यः। अ-खण्डं वाक्यमेव वाचकम्। अनया प्रक्रियया व्यङ्ग्योऽपि विध्यादि-र्वाच्य एवेत्याक्षेपः। नैरप्यविद्येत्यादि। अविद्यापदं व्यवहारदर्शो। योऽयमेषां समर्थनप्रयासस्तदेव ह्यविद्यापदं भवति। तत्पतितैः पदपदार्थकल्पना दुर्लङ्घ्या। विद्यापदे तु समर्थनादिसमस्तप्रपञ्चोपश-मशालिनि तूष्णीम्भावोऽपि नावशिष्यत इति तेषामपि मते निर्वि-वादा व्यङ्ग्यसिद्धिः।

अथ सर्वेषां ध्वनीनामनुमानेऽन्तर्भाव इत्युक्तवतो व्यक्तिविवे-ककृतो मतमुपन्यस्यति — वाच्यादसम्बद्धस्तावदित्यादिना। यद्यसम्बद्धः प्रतीयेत, ततः को दोष इत्यत आह — यतःकुतश्चि-

साहित्यचूडामणिः

द्धेति। अखण्डया बुद्ध्या निर्ग्राह्यत्वनियमाद् वाक्यान्तरप्रतीतेः सर्वोऽप्यर्थो वाच्य एव तथा वाच्यमेव वाचकं पदमिति ये प्राहुस्तैरप्यविद्यापदपतितैर्माया-पथप्रवृत्तैः प्रकृतिप्रत्यययोरिव पदपदार्थयोः कल्पना सर्वा कर्तव्येति तन्मतेऽपि 'निश्शेषच्युते'त्यादौ विध्यादिर्व्यङ्ग्य एव। तदुक्तं—*"येऽप्यविभक्तं स्फो-टमेव वाक्यं तदर्थमाहुः, तैरप्यविद्यापदपतितैः सर्वेयमनुसरणीया प्रक्रिया। तदुत्तीर्णत्वे तु परमेश्वराद्वयमयं ब्रह्मेत्यस्मच्छास्त्रकारेण न न विदितं तत्त्वा-लोकग्रन्थं विरचयतेत्यास्तामि"ति। अथ सौगतानुसारादनुमानैकप्रधानो म-हिमा प्रत्यवतिष्ठते — वाच्यादिति। अविवक्षिताद्विवक्षिताद्वा सम्बन्धरहितं यद्वस्तु तन्न प्रतीयते। यतःकुतश्चिद्वाच्याद्यस्य कस्यचिदर्थस्य या प्रतीतिः

१. 'द्धं ताव' क. पाठः. २., 'च्यार्थः। अ' ग. पाठः. ३. 'दे', ४. 'शा-माम्। यो', ५. 'द्धं ता' ख. पाठः. ६. 'त को' ख. ग. पाठः. ७. 'तौ' ख. पाठः.

* 'येऽप्यविभक्तं स्फोटं वाक्यं तदर्थरूपमित्याहुः तैरप्यविद्यापदपतितैः सर्वेयम-नुसरणीया प्रक्रिया। तदुत्तीर्णत्वे तु सर्वं परमेश्वराद्वयं ब्रह्मेत्यस्मच्छास्त्रानुसरणेन विदितं तन्त्रालोकग्रन्थं विरचयतेत्यास्ताम। इति मुद्रितलोचनपाठः.

यस्यकस्यचिदर्थस्य प्रतीतेः प्रसङ्गात्। एवंञ्च[1] सम्बन्धाद्[2] व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गात लिङ्गिनि ज्ञानं यद् नुमानं तद्रूपः पर्यवस्यति। तथाहि —

भम धम्मिअ! वीसत्थो सो सुणओ अज्ज मारिओ देण[3]।
गोळाणइकच्छकुडुङ्गवासिणा दरिअसीहेण॥

सम्प्रदायप्रकाशिनी

दित्यादि। सम्बन्धाभ्युपगमे तु व्यङ्ग्यव्यञ्जकभावः सर्वथा प्रतिबद्ध एव भवती(त्यत आ? त्या)ह — एवञ्च सम्बन्धादित्यादि। प्रतिबन्धो नियतः सम्बन्धः। इत्थं व्याप्तिसिद्धावनुमानता ध्वनेः पर्यवस्यतीत्याह[4] — व्याप्तत्वेन नियतेत्यादि। सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिश्च व्याप्तत्वम्। नियतधर्मिनिष्ठत्वं पक्षधर्मता। इत्थं त्रिरूपाल्लिङ्गाद् वाच्यरूपाल्लिङ्गिनि व्यङ्ग्याभिमते यदनुमानात्मकं ज्ञानं तद्रूपः पर्यवस्यति, तदायं व्यञ्जनाव्यापार इति शेषः। तामिमामनुमानतां प्रसिद्धे ध्वनिकारोदाहरणे योजयितुमाह— तथाहि भम धम्मिअ इति।

भ्रम धार्मिक! विस्रब्धः स श्वाद्य मारितस्तेन।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन॥

साहित्यचूडामणिः

तस्याः प्रसङ्गात्। एवञ्च सम्बन्धो भवदभिमतो व्यङ्ग्यव्यञ्जकभावः प्रतिबन्धहानौ न सम्पद्यते। तत एतत् संवृत्तम्। व्याप्तत्वेन सपक्षावगाहितया। नियतेति। धर्मिणि साध्यधर्मविशिष्टे निष्पत्तिर्यस्य। एतेन पक्षवृत्तित्वसिद्धिः। नियतत्वेन विपक्षाद् व्यावृत्तिरिति त्रिरूपाद्। यदाहुः "त्रिरूपाल्लिङ्गतोऽर्थदृगि"ति। लिङ्गिनि व्यङ्ग्यलक्षणे यद् ज्ञानमनुमानाकारं तद्रूपः पर्यवस्यति। न पुनरलौकिकशब्दशक्त्यन्तरमूलतास्योपपद्यत इति। तत्र ध्वन्युदाहरणमादौ पर्यालोचयति — तथाहीति। भमेति।

भ्रम धार्मिक! विस्रब्धः स श्वाद्य मारितस्तेन।
गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥

---

१. 'वं हि स', २. 'न्धो व्य' क. ख. पाठः. ३. 'णे' क. पाठः, ४. 'तीत्यत आह', ५. 'यताल्लिङ्गि', ६. 'ध्वनिका' ग. पाठः.

अत्र गृहे श्वनिवृत्त्या भ्रमणं[1] विहितं गोदावरीतीरे सिंहोपलब्धरभ्रमणमनुमापयति। यद्यद्[2] भीरुभ्रमणं तत्तद् भयकारणनिवृत्त्युपलब्धिपूर्वकम् । गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः । अत्रोच्यते — भीरुरपि गुरोः

सम्प्रदायप्रकाशिनी

इयं सङ्केतनिकुञ्जे कुसुमाद्यर्थिनो धार्मिकस्य भ्रमणनिवारणपरा स्वैरिण्युक्तिः। इह व्यङ्ग्यस्यानुमेयतां दर्शयितुमाह — अत्र गृह इत्यादिना । श्वा सिंहेन व्यापादित इति श्वनिवृत्त्या गृहे यदेतद् भ्रमणं विहितं तद् गोदावरीतीरे सिंहोपलब्धिमाविष्कुर्वद् भ्रमणनिषेधमनुमापयति । तत्र लिङ्गस्य व्याप्तिं दर्शयति — (यद्यदित्यादि ।) यद्यद् भीरुभ्रमणं तत्तद् भयकारणनिवृत्त्युपलब्ध्या प्रतिबद्धमिति यावत् । गोदावरीतीरे तु सिंह उपलभ्यत इति व्यापकविरुद्धोपलब्धिः। तदेतद् दूषयति— अत्रोच्यते भीरुरपीत्यादिना। यद्यद् भीरुभ्रमणं तत्तद्

साहित्यचूडामणिः

इति । इयं केनचिदभिमतेन यूना सह सम्भोगाभिलाषिण्या गोदावरीतीरलतानिकुञ्जदत्तसङ्केतायास्तत्रैव समित्कुसुमादिहेतुना भ्रममाणं धार्मिकापशदमक्षममाणायाः सारमेयमारणोपन्यासेन तद्भ्रमणं प्रतिषेद्धुं कस्याश्चिदुक्तिः । भ्रम अतिसृष्टोऽसि प्राप्तः काल इति वा। धार्मिक! कुसुमाद्यर्थं युक्तं ते भ्रमणम् । विस्रब्धः शङ्काकारणवैकल्यात्। सः यस्तव भीत्युत्कर्षमकार्षीत्। श्वा नित्योपद्रवस्वभावः । अद्य दिष्ट्या वर्धसे । मारितः न तस्य पुनरुत्थानम् । तेन यः पूर्वं कर्णाकर्णिकया श्रुतः । गोदेत्यादि, सदा निगूढं वर्तमानेन । दृप्तसिंहेन दर्पाटोपान्मत्तमातङ्गमिव क्षुद्रं कुक्कुरमपि प्रहर्तुमुद्युक्तेन। अत्र स्वतस्सिद्धमपि भ्रमणं कुक्कुरभयादपोदितमिति प्रतिप्रसवात्मको विधिर्न नियोगादिरूपः ।

तदेतदनुमानानुकूल्येन व्याचष्टे — अत्रेति । गृहे शुनो निवृत्त्या निषेधरूपतया विहितं सद् भ्रमणं गोदावरीतीरे सिंहसद्भावमुपलम्भयत् धार्मिकस्य भीरुस्वभावस्य भ्रमणप्रतिषेधमनुमापयति। प्रयोगं रचयति — यद्यदिति । व्यापकेति । प्रतिषेधस्य यद् व्यापकं तस्य यद् विरुद्धं तस्योप-

१. 'णमपि वि', २. 'द् भयकारकभी' क. पाठः. ३. 'तस्ते का' क. ख. पाठः.

प्रभोर्वा निदेशेन प्रियानुरागेण अन्येन चैवम्भूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः । श्वतो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि । गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपितु वचनात् । नच वचनस्य प्रामाण्यमस्ति, अर्थेनाप्रतिबन्धा-

सम्प्रदायप्रकाशिनी

भयकारणानिवृत्त्युपलब्धिपूर्वकमिति यदुक्तं तन्नास्ति । यतो भीरुरपि भयकारणे सत्यपि च गुरुनिदेशादिना भ्रमति । अतो हेतुः पक्षत्रयवर्तनादनैकान्तिकः । विरोधमुद्भावयति— श्वतो बिभ्यदपीति । नहि यः श्वतो बिभेति स नियमेन भीरुः, मृगेन्द्रमृगयोरपि कचिच्छुनो भयदर्शनात् । अतो हेतुर्विरुद्धः । असिद्धमुद्भावयति —गोदावरीतीर इत्यादि । येयं धार्मिकस्य गोदावरीतीरे सिंहोपलब्धिः, नहि सा प्रत्यक्षतोऽनुमानतो वा सिद्धा, अपित्वस्मादेव स्वैरिणीवच-

साहित्यचूडामणिः

लब्धिः यथा नात्र तुषारस्पर्शोऽग्नेः इति अनुपलब्धिवर्षाडशंक काचिंदर्षां । भ्रमणस्य सिंहसद्भावस्य च निवर्त्यनिवर्तकभावो विरोधः । अयं भावः—भीरुभ्रमणस्य भयकारणाभावपूर्वकत्वनैयत्यात् क्षुद्रसत्त्वस्य कुक्कुरस्य व्यावृत्त्या सम्भवन् भ्रमणविधिः क्रूरतरस्य केसरिणः सद्भावोपलब्ध्या तत्प्रतिषेधहेतुः । येन स श्वा मारित इति णिच्प्रयोगः । केसरिव्यापारो हि वाच्यकक्ष्यायां धार्मिकभ्रमणविधौ हेतुः । तमेव परीक्षमाणो विचक्षणस्तन्निषेधमनुमातुमर्हति । नहि कश्चित् स्वस्थचित्तः सारमेयभयादपि भ्रमितुमप्रभवन् पञ्चास्यसञ्चारोचिते प्रदेशे परिभ्रमतीति स्वभावविरुद्धोपलब्धौ प्रयोगः पर्यवस्यति । यथा नात्र शीतस्पर्शोऽग्नेरिति । तदेतत् खण्डयति — अत्रोच्यत इति । दृष्टादृष्टप्रत्यवायपरिहारार्थमुक्तं— प्रभोर्गुरोर्वेति । अन्येन मदोन्मादादिना । भयकारणसद्भावेऽपि भ्रमतीत्यनैकान्तिकः । पक्षत्रयवृत्तित्वाद् विरुद्धोऽपीत्याह— श्वत इति । विपक्षव्याप्तो विरुद्धः । असिद्धोऽपीत्याह — गोदावरीति । विदग्धया कयाचित् स्वोत्प्रेक्षामात्रेणोपक्षिप्तत्वात् न प्रत्यक्षेण हर्यक्ष-

१. 'द', २. 'त्वादय' क. घ. पाठः. ३. 'दनोन्म' ख. पाठः

दित्यसिद्धश्च । तत् कथमेवंविधाद्धेतोः साध्यसिद्धिः । तथा 'निश्शेषच्युते'त्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति । अतश्चात्रैव

---

सम्प्रदायप्रकाशिनी

नात् । नह्यस्य प्रामाण्यमस्ति, प्रतारणपरत्वेनार्थाप्रतिबन्धात् । अतो हेतुरसिद्धश्च । दोषाणामचलत्वान्निरुत्तरं महिमानमपहसति — तत् कथमित्यादि । यथैव ध्वनिकारोदाहरणे निराकृतोऽनुमानपक्षस्तथा स्वोदाहरणेऽपि निराकर्तुमाह — तथा निश्शेषच्युतेत्यादाविति । गमकतया उपभोगलिङ्गतया । कारणान्तरतोऽपीति । नह्युपभोगव्यतिरिक्तं चन्दनच्यवनादेः कारणं नास्तीति प्रतीत्यपलापोऽपि दुश्शकं इत्यभिप्रेत्याह — अतश्चात्रैवेति । अतोऽप्रतिबन्धाद्

साहित्यचूडामणिः

सिद्धिः । अनुमानेन चेदनवस्था । पारिशेष्यादेतद्वचनादेव । नच तस्यास्ति प्रामाण्यं सौगततीर्थावगाहनादर्थेनाप्रतिबन्धादनाप्तवाक्यत्वादित्यप्यूह्यम् । निगमयति — तत्कथमिति । एतन्निजोदाहरणे योजयति — निश्शेषेति । चन्दनच्यवनादीनि लिङ्गान्यनैकान्तिकानि कारणान्तरतोऽपि भावाद् यतोऽत्र स्नानकारणत्वेनाप्युक्तानीति । इदमत्रावधातव्यं — न पुनरयं परमार्थो यद् व्यञ्जकत्वं लिङ्गत्वमेवेति । द्विविधो हि विषयः शब्दानामनुमेयः प्रतिपाद्यश्च । तत्र विवक्षालक्षणोऽनुमेयः । विवक्षा च शब्दस्य स्वरूपप्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा च । आद्या न शब्दव्यवहाराङ्गम् । सा हि प्राणित्वमात्रप्रतिपत्तिफला । द्वितीया तु शब्दविशेषावधारणान्ववसिता व्यवहितापि शाब्दे व्यवहारे कारणमिति द्वे अप्यनुमेयो विषयः शब्दानाम् । यः पुनः प्रतिपाद्यरूपः प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः सोऽपि द्विविधः वाच्यो व्यङ्ग्यश्च । द्विविधोऽप्ययं न लिङ्गितया स्वरूपेण प्रकाशते । तथात्वे शब्दार्थचिन्तायां सम्यङ्मिथ्यादिविवादा एव न प्रवर्तेरन् धूमादिलिङ्गान्वितानुमेयान्तरवत् । तस्माद् वक्त्रभिप्राय एव लिङ्गतया शब्दानां व्यापारः, नान्यत्र । तन्मूलाच्च

---

१ 'णं नास्ति नो' क. घ. पाठः. २. 'त्याल' क. पाठः. ३ 'पीति ह्यु' ग. पाठः. ४. 'ह्यु' क. ख. ग. पाठः ५. 'प्रतीति' क. पाठः. ६. 'ङ्गानुमिता' घ. पाठः.

स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि। व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। नचात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम् ।

सम्प्रदायप्रकाशिनी

अनैकान्तिकमित्याह — नोपभोग एवेति । इत्थं पराजितस्य प्रतिबन्दिपरिग्रहमपि प्रत्याचष्टे—व्यक्तिवादिना चेत्यादिना । अधमपदेति । सर्वथा तावदर्थवता भाव्यमधमपदेन । तेन स्वार्थसहितेन कृतसाहाय्यानां चन्दनच्यवनादीनामप्रतिबन्धेऽपि व्यञ्जकत्वं युक्तमुक्तं व्यक्तिवादिना । तदधमपदसहकृतानां लिङ्गत्वेनानुमानं किं न स्यादित्यत आह—नचात्राधमत्वमित्यादि । अधमत्वस्य प्रमाणतोऽनवधारणाद् नानुमानमुपपद्यते । तदधमत्वस्य निष्प्रमाणकत्वलक्षणो

साहित्यचूडामणिः

भ्रमादन्यत्रापि तद्योजनाप्रयासः । ततोऽपि न व्यञ्जकत्वं लिङ्गत्वमालोकादिष्वन्यथा दृष्टत्वात् । तस्माल्लिङ्गप्रतीतिरिति न युक्तं वक्तुम् । यदाहोद्भटः — "नचानुमितमात्रतया स्थितो भावः काव्यस्य जीवितम् । अपि तु साधारण्येन प्रतिपन्नो रसनाव्यापारगोचरः । एवं रसेऽप्यवगन्तव्यम् । तत एव व्यङ्ग्या रसभावतदाभासतत्प्रशमाः काव्यतत्त्वविद्भिरभिधीयन्त" इति । किञ्चानुमानमपि व्यङ्ग्यव्यञ्जकभाव एवेत्युपनिषत् । तदुक्तं तत्रैव "तस्यैवानुभूतपूर्वस्य संस्कारात्मनान्तर्विपरिवर्तिनः कुतश्चिदव्यभिचारिणोऽर्थान्तरात् तत्सदृशाद्वा तत्प्रतिपादकाच्छब्दाद्वा संस्कारप्रबोधमात्रं (तृतीये" ? )त्यलमत्याटोपेन । ननु निश्शेषच्युतेत्यादौ यानि चन्दनच्यवनादीनि लिङ्गतयाभिमतानि तेषां स्नानकार्यतयाप्युपादानाद् यदनैकान्तिकत्वमुक्तं तद् व्यञ्जनेऽपि समानमित्याशङ्क्याह — व्यक्तीति । वल्लभस्याधम्यमुपभोग एव पर्यवस्यति न स्नाने । नन्वेवमधमपदसहायानामेव तेषामनुमापकत्वमस्तीति चेत् तत्राह — नचेति । स्वयमप्रमितस्य कथमन्यप्रमापकत्वम् । ननु पुनरपि समः

---

१. 'त्वध' क. ख. पाठः. २. 'रप्र बन्दीर' ग. पाठः. ३. 'हचर्याणां च' ख., 'हाय्यादीनां' क. घ. पाठः. ४. 'यु' क., 'म् । व्य', ५. 'दत', ६. 'मपदत्व' ग. पाठः. ७. 'मिति । अ' ख. ग. पाठः. ८. 'ममत' क. ख. पाठः.

एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि[1] प्रकाशत इति

सम्प्रदायप्रकाशिनी

दोषस्त्वामपि किं नोपमृद्नीयादित्यत आह — एवंविधादर्थादित्यादिना । एवंविधाद् अधमपदसहकृतात् चन्दनच्यवनादिरूपाद् व्यञ्जकादर्थाद् एवंविधः उपभोगरूपो व्यङ्ग्योऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशते किमिदमधमत्वं प्रामाणिकमुताप्रामाणिकमित्युपपत्तिनैरपेक्ष्येण प्रतीयते । नहि 'निश्शेषच्युते'त्यतः काव्यरूपाद् भवन्ती कामुकोपभोगरूपार्थान्तरप्रतीतिः कामुकस्य दासीप्रधर्षकत्वमधमत्वमुपपन्नं व्यपेक्ष्य जायते । अतः उपपत्त्यनुपपत्तिचिन्ता तवानुमाने लक्षणशरीरं, व्यञ्जके तु लक्षणकोटिरेव न भवति । अतस्तवैतदनुपपन्नत्वदूषणमि-

साहित्यचूडामणिः

समाधिरिति चेत् तत्राह — एवंविधादिति । उपपत्त्यनपेक्षत्वेऽपि प्रमितत्वनिबन्धनपराङ्मुखत्वे सत्यपि प्रतीतिमात्रपरमार्थत्वात् काव्यव्यवहारस्य । यदुक्तं काव्यविषये च वाच्यव्यङ्ग्यप्रतीतीनां सत्यासत्यनिरूपणमप्रयोजकमेवेति । तत्र प्रमाणान्तरपरीक्षोपहासायैव सम्पद्यत इति तावतापि तस्य चमत्कारौपयिकत्वम् । तदुक्तं —

"मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥"

इति । न पुनरेवं युष्मत्पक्षे प्रमाविशेषोऽप्यनुमा तत्करणमनुमानं प्रमात्वं च समीचीनस्यानुभवस्य समीचीनता च संशयविपर्ययव्युदासाधीनेति । व्यक्तिवादिनस्तु तदा धर्मस्य प्रमाणाप्रतिपन्नत्वमदूषणमेव दूषणमेव न स्यात्, प्रत्युत भूषणमेव स्यात् । अयमेव हि लोकतः काव्यस्यातिशयः । यदुक्तं — "किमत्र परचित्तवृत्तिमात्रे प्रतिपत्तिरेव रसप्रतिपत्तिरभिमता भवतः । नैव प्रमितव्यम् । एवं हि लोकगतचित्तवृत्त्यनुमानमात्रमिति । अपाकृतं चैतत् सामान्येन वैयाकरणैः । यथा —

"अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु ।
भावानामनुमानेन प्रसिद्धिरिति दुर्लभा ॥"
"वस्तुस्पर्शादिवान्धेन विषमे पथि धावता ।
अनुमानप्रदानेन विनिपातो न दुर्लभः ॥"

१. 'त्वेन प्र' क. ख. पाठः. २. 'तच्च', ३. 'इय' ख. ग. पठः. ४. 'नैव क' ग. पाठः.

व्यक्तिवादिनः पुनस्तद्दूषणम् ॥ ३ ॥

इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम

पञ्चम उल्लासः ॥

---

सम्प्रदायप्रकाशिनी

त्येतदुक्तप्रायमेवेत्यभिप्रायेणाह — व्यक्तिवादिनः पुनस्तद्दूषणमिति ॥ ३ ॥

सम्यगत्र प्रमेयस्य हृदयोद्घाटनं कृतम् ।
प्रेक्षावन्तः परीक्षन्तां प्रीत्या वा स्पर्धयाथवा ॥

इति[1] संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वजपैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्यकाव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरमयोगीश्वरश्रीमत्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकविश्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्या

काव्यप्रकाशबृहट्टीकायां

पञ्चम उल्लासः ।

---

साहित्यचूडामणिः

इत्यागमस्यैव पर्यन्ततः प्रामाण्याभिषेकौचित्यम् । प्रत्यक्षादिवदनुमानस्यापि क्वाचित्क एवोपयोग इति तात्पर्यम् । अतश्चेदमाकम्यते प्रतिपत्तॄन् प्रति सा प्रतिभा नानुमीयमाना अपितु तत्तदावेशेन भासमाना । यदाह — "नायकस्य कवेः श्रोतुः समानोऽनुभवः स्मृत" इति । एतेन वक्रोक्तिर्व्याख्याता । येन ध्वनिवक्रोक्त्योर्नात्यन्तविशेषः यतस्त एव भेदास्तान्येवोदाहरणानि । यथोक्तं—

"प्रसिद्धमार्गमुत्सृज्य यत्र वैचित्र्यसिद्धये ।
अन्यथैवोच्यते सोऽर्थः सा वक्रोक्तिरुदाहृता ॥"

इति । तेन ध्वनिवदेषापि वक्रोक्तिरानुमानिकीति व्यक्तिविवेकखण्डः खण्डितः । किञ्च ध्वनेरभावो भाक्तत्वमनिर्वचनीयत्वं चेति शृङ्खलाक्रमेण त्रयो विकल्पाः । यदुक्तं वाच्यादन्यद् व्यङ्ग्यं नास्ति सदपि वा तद् भाक्तम्

---

१. 'णंप्रभे' क. पाठः. २. 'नरद्', ३. 'ति श्री' ख. ग. पाठः.

साहित्यचूडामणिः

अर्थसामर्थ्याक्षिप्तत्वात् तदनाक्षिप्तमपि वा वक्तुमशक्यमिति। तेषु प्राच्या विपर्यस्ताः मध्यमास्तद्रूपं जानाना अपि सन्देहेन निह्नुवते। अन्तिमास्तु अनिह्नुवाना अपि लक्षयितुं न क्षमन्त इति यथोत्तरमेते भव्यबुद्धयः। पुनरभावविकल्पस्य प्राथमिकस्य तिस्रः कल्पनाः। यथा — नान्यो ध्वनिरस्ति योऽस्माभिर्न गणित इत्येका, यो वा न गणितः स न शोभाकारीति द्वितीया, अथ शोभाकारी तदस्मदनुक्रान्ते गुणालङ्कारादावन्तःपततीति तृतीयेत्यपि य आक्षेपप्रकारस्तस्यापि त(त्र ? न्त्र)युक्तिभिः प्रतिक्षेपः परीक्षणीयो विचक्षणैरिति सिद्धम् ॥ ३ ॥

अमत्सराणां गुणवत्सलानां गोष्ठीविनोदे महतां कवीनाम् ।
तर्के विचि(त्रैः ? त्रे) कतिचिद् विदग्धाः सम्यग् ध्वनिं साधयितुं क्षमन्ते ॥

जयति प्रतिभोल्लेखरूपिकाशिल्पशालिनी ।
चराचरचरित्रस्य चित्रभित्तिः सरस्वती ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां
पञ्चम उल्लासः ॥

---

शुभं भूयात् ।

# काव्यप्रकाशोदाहृतश्लोकसूची ।

# सम्प्रदायप्रकाशिन्युपात्तवाक्यतद्ग्रन्थतत्कर्तारः ।

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ४ | 'नियतिर्नियमनरूपा' | ... | तान्त्रिकाः |
| ,, | ... | ... | सांख्याः |
| ५ | .... | ... | वैशेषिकाः |
| ६ | 'कमलमनम्भसि—' | ... | ... |
| ७ | 'नियतिः कर्मापरपर्यायः' | ... | सान्धिविग्रहिकः |
| ८ | ... | ... | कालिदासः |
| ,, | ... | ... | धावकः |
| ,, | ... | रत्नावली | ... |
| १० | ... | रघुवंशम् | ... |
| १२ | ... | ... | सान्धिविग्रहिकः |
| ,, | 'वाक्यं सर्वं परार्थत्वात्—' | ... | ... |
| १३ | 'स्मृतिर्व्यतीतविषया—' | ... | ... |
| १४ | 'लोकवृत्तं लोकः' | ... | वामनः |
| १५ | 'न स शब्दो न तद् वाच्यं—' | ... | ... |
| १९ | ... | अलङ्कारसर्वस्वसञ्जीविनी | श्रीविद्याचक्रवर्ती |
| २१ | ... | .... | ध्वन्याचार्याः |
| २५ | 'सम्बन्धिशब्दः सापेक्षो—' | ... | ... |
| ३२ | 'आकाङ्क्षा प्रतिपत्तुर्हि—' | ... | ... |
| ,, | 'यस्य येनाभिसम्बन्धो—' | ... | ... |
| ४१ | ... | वाक्यपदीयम् | ... |
| ४२ | ... | ... | भर्तृहरिः |
| ४३ | 'कालानुपाति यद्रूपं—' | ... | ... |
| ४९ | 'गौणमुख्ययोर्मुख्ये—' | ... | ... |
| ,, | 'स्वायत्तश्च शब्दप्रयोगः' | ... | ... |
| ५२ | 'नागृहीतविशेषणा—' | ... | ... |
| ,, | 'भवेद् विशेष्यधीरेव—' | ... | ... |
| ६२ | ... | लघुटीका | ... |
| ७१ | ... | ... | भाट्टादयः |
| ९९ | 'शिथिलशिथिलं न्यस्य—' | ... | ... |

## साहित्यचूडामण्युपात्तवाक्यतद्ग्रन्थतत्कर्तारः ।

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| २ | ... | काव्यादर्शः | दण्डी |
| ,, | ... | वृत्तिः | वामनः |
| ,, | ... | ... | कुन्तकः |
| ,, | ... | ... | उद्भटः |
| ,, | ... | ... | भामहः |
| ,, | ... | ... | रुद्रटः |
| ३ | ... | ... | धनञ्जयः |
| ,, | ... | ... | भोजः |
| ,, | ... | लोचनम् | ... |
| ,, | ... | ... | ध्वनिकारः |
| ,, | ... | ... | महिमा |
| ५ | 'स्वभावमवभासस्य—' | ... | ... |
| ,, | 'संविन्मार्गोऽयमाह्लाद—' | ... | ... |
| ६ | 'अपारे काव्यसंसारे—' | ... | ... |
| ,, | 'भावानचेतनानपि—' | ... | ध्वनिकारः |
| ९ | 'धर्मार्थकाममोक्षेषु—' | ... | ... |
| १० | 'शब्दप्राधान्यमाश्रित्य—' | ... | ... |
| ,, | 'स्वादुकाव्यरसोन्मिश्रं—' | ... | ... |
| ,, | 'प्रज्ञा नवनवोन्मेष—' | ... | ... |
| ११ | 'कटुकौषधवच्छास्त्रम्—' | ... | ... |
| १२ | 'सरस्वत्यास्तत्त्वं कवि—' | लोचनम् | ... |
| ,, | 'काव्यं सद् दृष्टादृष्टार्थं—' | ... | ... |
| १३ | 'प्रतिष्ठां काव्यबन्धस्य—' | ... | ... |
| ,, | 'नाकवित्वमधर्माय—' | ... | ... |
| १४ | 'लोको विद्याः प्रकीर्णं च—' | ... | ... |
| १५ | ... | कुमारसम्भवम् | ... |
| ,, | ... | बृहत्कथा | ... |
| ,, | ... | रामायणभारतादि | ... |
| ,, | 'आधानोद्धरणे तावद्—' | ... | ... |
| १६ | 'न शब्दस्य रमणीयताविशिष्टस्य—' | वक्रोक्तिः | ... |

| पृष्ठम् | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| १७ | 'दोषहानं गुणादानं—' | ... | ... |
| ,, | 'मुख्या महाकविगिराम्—' | ... | ... |
| ,, | 'निर्दोषं गुणवत् काव्यम्—' | ... | ... |
| ,, | 'मुख्यार्थहतिर्दोषो रसश्च मुख्यः' | | ... |
| ,, | 'ये रसस्याङ्गिनो धर्माः—' | ... | ... |
| ,, | 'उपकुर्वन्ति तं सन्तं—' | ... | ... |
| १९ | 'अयं स रशनोत्कर्षी—' | ... | ... |
| २० | 'किं ते गण्डे कितव—' | ... | भट्टगोपालः |
| ,, | 'तत्परावेव शब्दार्थौ—' | ... | ... |
| ,, | 'अर्थः सहृदयश्लाघ्यः—' | ... | .... |
| २१ | 'वाच्यानां वाचकानां च—' | ... | ... |
| ,, | 'यथा पदार्थद्वारेण—' | ... | ... |
| २२ | 'क्रमवर्तिषु वर्णेषु—' | ... | ... |
| ,, | 'बुद्धौ तु सम्भवस्तस्य | ... | ... |
| ,, | 'धीरन्त्यशब्दविषया—' | ... | ... |
| ,, | 'तस्माद् ध्वनिः शब्दः' | ... | आचार्यमहाभाष्यकारः |
| ,, | ... | ... | आचार्यानन्दवर्धनः |
| २३ | ... | व्यक्तिविवेकः | ... |
| ,, | 'यत्रार्थः शब्दो वा तमर्थं—' | ध्वनिकारिका | ... |
| ,, | 'समारोपितनायिकानायक—' | ध्वनिवृत्तिः | ... |
| २४ | 'अलङ्कारान्तरस्यापि—' | ... | ... |
| ,, | 'स्त्रियः कामितकामिन्यः' | ... | ... |
| २७ | 'प्रधानगुणभावाभ्यां—' | ... | .... |
| २८ | 'सा गोष्ठी यत्र कविः—' | ... | ... |
| २९ | 'श्लाघ्यं गुणैरनुगुणैः—' | ... | ... |
| ३० | 'तात्पर्यमेव वचसि ध्वनिरेव काव्ये' | ... | भोजः |
| ३६ | 'क्वचिद् बाध्यतया ख्यातिः—' | ... | ... |
| ३७ | 'तेषु शब्दस्यार्थाभिधायिनी—' | ... | भोजः |
| ३८ | 'सर्वाकारपरिच्छेद—' | ... | ... |
| ,, | 'व्यापारोऽर्थे ध्वनेः साक्षाद्—' | ... | .. |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ३९ | 'गुणवृत्तिरमुख्यत्वेन स्थितं—' | ... | ... |
| ४२ | 'भिन्नेष्वभिन्नधीशब्दौ—' | ... | ... |
| ४३ | 'यद्यद् विशेष्यते किञ्चित्—' | ... | ... |
| ,, | 'ध्वनिप्रकाशिते शब्दे—' | ... | ... |
| ४४ | 'व्यक्तेरभेदस्तुल्यत्वं—' | ... | ... |
| ४७ | 'घटतीति घटो ज्ञेयो—' | व्यक्तिविवेकः | . |
| ५० | 'अतस्मिंस्तत्समारोपो—' | ... | ... |
| ,, | 'रूढा ये विषयेऽन्यत्र—' | ... | ... |
| ५४ | 'दृष्टः श्रुतो वार्थोऽन्यथा—' | ... | ... |
| ५८ | 'केचिच्छब्दारोपपूर्वं—' | ... | उद्भटः |
| ५९ | 'लक्षणा तावद् गौणीमपि—' | लोचनम् | ... |
| ,, | 'यस्तु तत्त्वसमारोप—' | व्यक्तिविवेकः | ... |
| ,, | 'गुणवृत्तौ गिरां यावत्—' | तथा | ... |
| ६० | 'तुल्यादिषु हि लोको—' | तथा | ... |
| ६१ | 'शस्तं धीस्मृतिमेधाभि—' | ... | ... |
| ,, | 'लक्ष्यमाणगुणैर्योगात्—' | ... | ... |
| ६२ | 'हस्ताग्राग्रहस्तादयो—' | ... | वामनः |
| ६३ | 'निरूढा लक्षणाः काश्चित्—' | ... | ... |
| ६९ | 'मुख्यां वृत्तिं परित्यज्य—' | ... | ... |
| ७६ | 'मन्त्रो हीनः स्वरतो वर्णतो—' | ... | . |
| ७७ | 'यस्यारिजातं नृपते—' | ... | ... |
| ८६ | 'यश्चाप्सरोविभ्रममण्डनानां—' | ... | ... |
| ,, | 'विभ्रमस्त्वरया काले—' | ... | ... |
| ८९ | 'दिट्ठाए जं ण दिट्ठो—' | ... | ... |
| ९१ | 'दृष्टिं हे प्रतिवेशिनि—' | ... | ... |
| ,, | 'गामउडवरपडोहर—' | .. | ... |
| ९२ | 'चुम्बसि जप्पावेन्ती—' | ... | भट्टगोपालः |
| ९५ | 'अर्थान्तरे संक्रमित—' | ... | ... |
| ९८ | 'परस्परविरुद्धत्वात्—' | ... | महिमा |
| ,, | 'असंलक्ष्यक्रमद्योत्यः—' | ... | ... |
| १०० | 'रसभावतदाभास—' | ... | ... |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| १०० | 'विषयत्वमनापन्नैः—' | ... | ... |
| १०१ | 'प्रधानेऽन्यत्र वाक्यार्थः' | ... | ... |
| १०२ | 'अनुभावविभावानां—' | ... | ... |
| १०३ | 'विभाव इति विज्ञानार्थः' | ... | ... |
| ,, | 'विरुद्धैरविरुद्धैर्वा—' | ... | ... |
| १०४ | 'पृथग्भावा भवन्त्येते—' | ... | ... |
| ,, | 'कविशक्त्यर्पिता भावाः—' | ... | ... |
| १०५ | 'अवस्थानुकृतिर्नाट्यं' | ... | ... |
| १०७ | 'प्रतिभाति न सन्देहो—' | ... | ... |
| १११ | 'रजस्तमोभ्यामस्पृष्टं—' | ... | ... |
| ११५ | 'अवस्थायुगलं चात्र—' | .. | आचार्याः |
| ११६ | 'आत्मानमात्मन्यवलोकयन्तम्' | ... | ... |
| ,, | 'आत्मानमत एवायं —' | ... | आचार्याः |
| ११७ | 'पाठ्यादथ ध्रुवागानात्—' | ... | ... |
| १२१ | 'ननु यदि ज्ञप्तिः न वा—' | ... | ... |
| १२८ | 'दशात्यसौ परभृतः—' | ... | ... |
| १२९ | 'तत्रायोगोऽनुरागेऽपि—' | ... | ... |
| १३० | 'यद्यदस्य प्रियं वेत्ति—' | . . | ... |
| ,, | 'रागात् फलवती सेयम्—' | .... | ... |
| १३१ | 'स्त्रीणामीर्ष्याकृतो मानः—' | ... | ... |
| ,, | 'तत्र प्रणयमानः स्यात्—' | .... | ... |
| ,, | 'अस्मिन्नेव लतागृहे—' | ... | ... |
| ,, | 'पणअकुविआण—' | .... | ... |
| १३२ | 'शापेनास्तङ्गमितमहिमा' | ... | ... |
| १३३ | 'पाषण्डविप्रप्रभृतेः—' | ... | ... |
| १३६ | ... | ... | उद्भटः |
| १३९ | 'न यत्र दुःखं न सुखं—' | ... | ... |
| ,, | 'निर्वेदादिरताद्रूप्याद्—' | ... | ... |
| ,, | 'शममपि केचित् प्राहुः—' | .... | .... |
| ,, | 'शमप्रकर्षोऽनिर्वाच्यो—' | .... | ... |
| ,, | ... | परिमलादि | ... |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| १८९ | 'एकातपत्रं जगतः प्रभुत्वं—' | ... | ... |
| ,, | 'क्षतात् किल त्रायत इत्युदग्रः—' | ... | ... |
| १९० | 'धूमज्योतिस्सलिल—' | ... | ... |
| ,, | 'शापान्तो मे भुजगशय—' | ... | ... |
| ,, | 'सुप्तिङ्वचनसम्बन्धैः—' | ध्वनिः | ... |
| ,, | '[illegible]सुबन्तचयो वाक्यं—' | ... | ... |
| ,, | 'अनिरा[illegible]णात् कर्तुः—' | ... | ... |
| १९१ | 'क्रियाविशेष[illegible]—' | ... | ... |
| १९९ | 'प्रभ्रश्यत्युत्तरीयत्विषि—' | ... | ... |
| ,, | 'मनुष्यवृत्त्या समुपाचरन्तं' | ... | ... |
| ,, | 'हा धिक् कष्टमहो क्व यामि—' | ... | ... |
| २०१ | ... | ... | महिमा |
| ,, | 'सा दयितस्य समीपे—' | ... | ... |
| ,, | 'अभुञ्जत भुवं प्राज्ञो—' | ... | भट्टगोपालः |
| २०२ | 'यस्त्वलक्ष्यक्रमव्यङ्ग्यो—' | ध्वनिः | ... |
| २०५ | 'तद्गेहं नतभित्ति' | ... | ... |
| २०७ | 'सौभाग्याय नमस्तवास्तु—' | ... | भट्टगोपालः |
| २१० | 'संवृत्याभिहितं वस्तु—' | ... | ... |
| ,, | 'मुख्या महाकविगिराम्—' | ... | ... |
| २११ | 'अव्युत्पत्तेरशक्तेर्वा—' | ... | ... |
| २१३ | 'व्यङ्ग्यस्य प्रतिभामात्रे—' | ... | ... |
| २१५ | 'वंशवीर्यश्रुतादीनि—' | ... | ... |
| २१९ | 'रसवद् दर्शितस्पष्ट—' | ... | उद्भटः |
| ,, | 'रत्यादिकानां भावानाम्—' | ... | ... |
| २२० | 'अनौचित्यप्रवृत्तानां—' | ... | |
| ,, | 'रसभावतदाभास—' | ... | ... |
| ,, | 'भावोदयभावसन्धि—' | ... | ... |
| ,, | 'ते चाद्यापि विकल्प्यन्ते—' | ... | दण्डी |
| २२१ | 'सत्यं निरुपमौनगर्भे—' | ... | ... |
| ,, | 'पत्युः शिरश्चन्द्रकलाम्' | ... | ... |
| ,, | 'प्रकारोऽयं गुणीभूत—' | ... | ... |
| ,, | 'तस्माद् वाक्यमत्र ध्वनिः—' | ... | ... |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| २२५ | 'शब्दार्थशक्त्याक्षिप्तोऽपि–' | ... | . |
| २२६ | 'यत्र प्रतीयमानोऽर्थः—' | ... | |
| ,, | 'सर्वेष्वेव प्रभेदेषु—' | ... | |
| २२७ | 'कोपं प्रभो संहर संहर' | ... | |
| २२८ | 'अर्थान्तरगतिः काक्वा—' | | |
| ,, | 'गुरुः खेदं खिन्ने मयि भजति' | .. | |
| २२९ | 'प्रकारोऽन्यो गुणीभूत—' | ... | |
| २३० | 'अलङ्कारान्तरस्यापि—' | | ... |
| २३३ | 'ध्वनेरित्थं गुणी–' | ... | ... |
| ,, | 'ण अ ताण वडइ ओहीं—' | विषमबाणलीला | .. |
| ,, | 'अयं विदग्धैरुपलाल—' | ... | ... |
| २३४ | 'प्रतीयमानं पुनरन्यदेव –' | . | . |
| ,, | 'ध्वननं ध्वन्यते तद्वद्—' | वार्त्तिकम् | ... |
| २३५ | 'तृतीयस्तु स्वप्नेऽपि न स्व—' | ... | ... |
| २३७ | 'उल्लास्य कालकरवाल—' | ... | .. |
| २४८ | 'यत्परः शब्दः स शब्दार्थः' | ... | ... |
| २५४ | 'श्रुतिलिङ्गवाक्यप्रकरण—' | ... | ... |
| २५५ | 'एकद्वित्रिचतुष्पञ्च—' | ... | ... |
| ,, | ... | शृङ्गारप्रकाशः | ... |
| २५६ | 'श्रुतिकष्टादयो दोषाः—' | ... | |
| २५७ | 'उक्त्यन्तरेणाशक्यं यत्—' | ... | . |
| ,, | ... | व्यक्तिविवेकः | .. |
| २५८ | 'अर्थभेदाद् विभिन्नेऽपि—' | ... | ... |
| २६१ | 'स्वरूपं प्रकाशयन्नेव—' | ... | ... |
| ,, | 'त्रयः प्रकाशाः स्वपर—' | ... | ... |
| २६२ | 'शब्दार्थशासनज्ञान—' | ... | ... |
| ,, | 'योऽर्थो हृदयसंवादी—' | ... | ... |
| २६४ | 'अवाचकस्याविगीत—' | ... | ... |
| २६५ | 'रामो द्विर्नाभिभाषते' | ... | .. |
| २६६ | 'अभिधेयेन सम्बन्धात्—' | ... | ... |
| २६९ | 'रविसंक्रान्तसौभाग्य—' | ... | ... |
| ,, | 'वाचकत्वाश्रयेणैव —' | ... | ... |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| २६९ | 'भक्त्या [illegible] ' | ... | ... |
| २[illegible]० | ... | ... | महिमा |
| | '[illegible] पुत्र कुरु श्लोकान्—' | ... | .... |
| | '[illegible] रावमन्द—' | ... | .... |
| २[illegible] | '[illegible]द्रकला—' | ... | ... |
| ,, | '[illegible]ि—' | ... | ... |
| ,, | 'चित्रवस्[illegible]' | ... | ... |
| २७२ | 'यऽप्यविभक्तं २. | | ... |
| २७३ | 'त्रिरूपाल्लिङ्गतोऽर्थदृक' | ... | .. |
| २७७ | 'नचानुमितमात्रतया —' | ... | [illegible] |
| २७८ | 'मणिप्रदीपप्रभयो:—' | | ... |
| ,, | 'किमत्र परचित्तवृत्तिमात्रे—' | ... | .. |
| ,, | 'अवस्थादेशकालानां ' | ... | वैयाकरणा: |
| ,, | 'वस्तुस्पर्शाद्विनान्वेन—' | .. | ... |
| २७९ | 'नायकस्य कवे: श्रोतु:—' | ... | .. |
| ,, | 'प्रसिद्धमार्गमुत्सृज्य—' | ... | ... |

## READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Râma Varma Mahârâjah. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः (Kavya) Syânandûrapuravarnanaprabandha by H. H. Svâti Sri Râma Varma Mahârâjah, with the commentary Sundarī of Râjarâja Varma Koil Tampurân. | 2 | 0 | 0 |

### Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalilâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalilâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dikshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakra kavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas). | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dipaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Sri Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Apastamba with Vivarana of Sri Sankara Bhagavat Pâda. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tikâsarvaswa of Vandyaghatîya Sarvânanda (Part II. 2nd Kânda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रंशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvatî. (Part I). | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankâra) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part III. 2nd Kânda 7—10 Vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part IV. 3rd Kânda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Srî Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III). | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Râghavânanda. | 0 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvati (Part IV). | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kâvya) by Bharavi with the commentary Sabdârthadîpika of Chitrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kâvya) by Kâlidasa with the commentary Pradîpa of Dakshinâvartanatha. | 1 | 0 | 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni. | 3 | 8 | 0 |
| No. 66— महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda. | 2 | 8 | 0 |
| No. 67—तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part I. 1–6 Patalas). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Srì Bhojadeva with the commentary Tâtparyadìpikâ of Srî Kumara. | 2 | 0 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part I. Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः (Part I). | 2 | 8 | 0 |
| No. 71— तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part II. 7—12 Patalas). | 3 | 8 | 0 |
| No. 72— ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part II. Mantrapada). | 4 | 0 | 0 |
| No. 73 — ईश्वरप्रतिपत्तिप्रकाशः (Vedanta) by Sri Madhusudanasarasvati. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 74— श्रीयाज्ञवल्क्यस्मृतिः (Dharmasâstra) with the commentary Bâlakrîdâ of Visvarûpâchârya. (Part I—Âchâra and Vyavahâra Adhyâyas). | 4 | 0 | 0 |
| No. 75—शिल्परत्नम् (Silpa) by Srîkumâra (Part I). | 3 | 4 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः (Part II). | 3 | 4 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part III. Kriyapada 1—30 Patalas). | 3 | 4 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् with the commentary Anavila of Haradattacharya. | 5 | 0 | 0 |
| No. 79—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part I—1 & 2 Adhikaranas). | 8 | 0 | 0 |
| No. 80—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part II—3 to 7 Adhikaranas). | 8 | 0 | 0 |
| No. 81—श्रीयाज्ञवल्क्यस्मृतिः (Dharmasastra) with the commentary Bâlakrîda of Visvarûpâchârya (Part II. Prâyaschittâdhyâya). | 3 | 12 | 0 |
| No. 82—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part III—8 to 15 Adhikaranas). | 8 | 0 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part IV. Kriyapada 31–64 Patalas and Yogapada). | 4 | 0 | 0 |
| No. 84—आर्यमञ्जुश्रीमूलकल्पः (Part III). | 2 | 12 | 0 |
| No. 85—विष्णुसंहिता (Tantra). | 4 | 8 | 0 |

| | | RS. | AS. | P. |
|---|---|---|---|---|
| No. 86— | भरतचरितम् (Kâvya) of Srî Krishnakavi. | 2 | 0 | 0 |
| No. 87— | सङ्गीतसमयसार: (Sangîta) of Sangîtâkara Srî Pârsvadeva. | 1 | 12 | 0 |
| No. 88— | काव्यप्रकाश: (Aalankara) of Mammatabhatta with two commentaries the Sampradayaprakasini of Sri Vidyachakravartin and the Sâhityachûddâmani of Sri Bhattagopala (Part I. 1-5 Ullasas). | 5 | 0 | 0 |

*Apply to:—*

*The Curator,*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*